2 Copies

Banarasi Prasad

Singha vyaghra sahita
jagadisw panchalakshmani

सिंहव्याघ्रसहिता जागदीशी पंचलक्षणी

Sanskrit

Paper – Printed

1930 Sambat – 1st Copy & 1940 Sambat – 2nd

1st Copy – 8 Folio & 2nd Copy – 12 Folio

14.8" x 5.8"
13.1" x 4.9"

Complete

F-7

No. 115

अथसिंह्व्याघ्रसहिताजागदीशीपञ्चलक्षणीप्रारभ्यते

श्रीगणेशायनमः॥ समारब्धेति॥ समारब्धंयदनुमानप्रामाण्यपरीक्षणंतत्कारणीभूतंयद्व्याप्तिग्रहोपायप्रतिपादनंतन्निदानंव्याप्तिस्वरूपनिरूपणमित्यर्थः। तथाचप्रामाण्यव्यव स्यायनोपोद्घातसंगत्याव्याप्तिस्वरूपनिरूपणमितिभावः। अव्याप्यवृत्तीति। कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिरित्यर्थः। इदंचयेनरूपेणयेनसम्बन्धेनचसाध्यत्वंतदव च्छिन्नप्रतियोगिताकसाध्याभावस्यप्रवेशमादस्य। अन्यथातुव्याप्यवृत्तिसाध्यकस्थलेऽपिविशिष्टाभावादिकमादायदोषोबोध्यः। अव्याप्यवृत्तिसाध्यकेव्याकाशादिहेतावव्याप्त्यभा वादाह॥ सद्धेतावितिः॥ वृत्तिमद्धेतावित्यर्थः। ननुसाध्यवद्भिन्नोयःसाध्याभाववानित्यर्थेसाध्याभाववत्पदवैयर्थ्यंसाध्यवद्भिन्नावृत्तित्वस्यैवसम्यक्त्वात्। नचावृत्तित्वेनसमंसा ध्यवद्भिन्नस्यान्वयाविवक्षणात्साध्याभाववतासममेवतादात्म्येनान्वयविवक्षणान्नवैयर्थ्यमितिवाच्यं। तथासति। साध्यवद्भिन्नात्मकोयोमत्वर्थः। संबंधीतदवृत्तित्वस्यैवस म्यक्त्वेनसाध्याभावपदव्यर्थताध्रौव्यात् अतःसप्तमीसमासंसमर्थ्यव्याचष्टे॥ साध्यवद्भिन्नइति॥ तथाचसाध्यवद्भिन्नस्यावृत्तावनन्वयापत्तिर्थासन्निवेशेनवैयर्थ्यम्। साध्याभा वेसाध्यवद्भिन्नवृत्तित्वविशेषणंत्वव्याप्यवृत्तिसाध्यकसंग्रहार्थमेवेत्याशयः साध्यवद्भिन्नवृत्तिद्रव्यत्वादिमतिधूमादेःसत्वादव्याप्तिरसम्भवोवास्यात्।। अतःसाध्याभावेति॥ न

॥ समारब्धानुमानप्रामाण्यपरीक्षाकारणीभूतव्याप्तिग्रहोपायप्रतिपादननिदानंव्याप्तिस्वरूपनिरूपणमारभतेनन्वित्यादिनासाध्या भाववदवृत्तित्वस्याव्याप्य वृत्तिसाध्यकसद्धेतावव्याप्तिमाशंक्याहसाध्यवद्भिन्नेति। साध्यवद्भिन्नेयःसाध्याभावस्तद्वदवृत्तित्वमित्यर्थः। कर्मादौसंयोगाद्यभावस्य। ॥ वृक्षकपिसंयोगीएतद्वृक्षत्वादिः

त्यादेःसंग्रहार्थमधिकरणभेदेनाभावभेदमादायैवलक्षणमिदंकार्यंतथाचसाध्यवद्भिन्नेयोभावस्तद्वदवृत्तित्वमित्यस्यैवसम्यक्त्वात्साध्यपदव्यर्थमितिवाच्यंप्रतियोगितासंसर्गेणसाध्यीय त्वेनैवसाध्याभावस्यप्रवेशः नत्वभावत्वेनापीति तद्धैयर्थ्यशंकानवकाशात्। वस्तुतस्तुस्वप्रतियोगितावच्छेदकसंसर्गेणसाध्यवद्भिन्नेवर्त्ततेयःसाध्यतावच्छेदकसंबंधेनसाध्यीयोऽभा वस्तद्वदवृत्तित्वमर्थः। तथाचसाध्यतावच्छेदकसंबंधेनसाध्यीयत्वार्थकस्यसाध्यपदस्यानुक्तौस्वप्रतियोगितावच्छेदकीभूतसमवायादिसंसर्गेणवह्न्यादिमतोऽन्यस्मिन्पर्वतादौव र्त्ततेयःसमवायसंबंधावच्छिन्नवह्न्यभावस्तद्वतिधूमादेःसत्वादव्याप्तिःस्यादतस्तदुपात्तमितिनव्याः केचित्तुव्याप्यवृत्तित्वाऽव्याप्यवृत्तित्वादिरूपविरुद्धधर्माध्यासात्संयोगाद्यभावस्ये वद्रव्यगुणाधिकरणभेदेनभेदेनतुगगनाद्यभावस्यापिमानाभावात्। तथाचसाध्यवद्भिन्नगगनाद्यभाववतिधूमादेःसत्वादव्याप्तिरतःसाध्यपदमित्याहुः। तन्नंदंगुणेगगनाद्यभावेगुणत्वादिसा मानाधिकरण्यनतुद्रव्येगगनाद्यभावेतथात्वमित्यादिप्रतीत्यागुणत्वसामानाधिकरण्यतदभावयोर्विरुद्धधर्मयोःसंभवादितिदिक्। नचघटत्वघटाकाशसंयोगान्यतरत्वावच्छिन्नाभाववान् गगनत्वादित्यत्राव्याप्तिःसाध्यवद्भिन्नेघटेवर्त्तमानस्यगगनादिसंयोगात्मकस्यसाध्याभावस्याधिकरणेगगनत्वहेतोःसत्वादितिवाच्यम्। अभावाभावस्यातिरिक्ततामतेएवैतल्लक्षणकर

भिन्नत्वइति। द्रव्यनिष्ठसंयोगाभाववतोभिन्नत्वेत्यर्थः मानाभावादिति। तथाचात्राव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिरितिभावः॥हेतोरिति। नचसाध्यवत्प्रतियोगिताकान्योन्याभावस्यकेवलान्वयित्वादसंभवएववक्तुमुचितोनाव्याप्तिरितिवाच्यं। वन्हिमान्गगनादित्यत्रगगनादिहेतौलक्षणसंभवात्। तस्यापिसद्धेतुतयास्वयंवक्ष्यमाणत्वादितिभावः साध्यपदस्यसिद्धिकर्मतत्तद्व्यक्तिपरतयातत्तद्व्यक्तित्वावच्छिन्नान्योन्याभावासामानाधिकरण्यरूपपर्यवसितार्थस्यद्रव्यंपृथिवीत्वादित्यादावेवलक्षणसंभवाद्गन्धवतीपृथिवीत्वादित्यादावव्याप्तिःकथनमित्यपिवदंति ननुसकलस्यसाध्यप्रतियोगिकाभावस्याधिकरणाप्रसिध्याव्यभिचारिण्यतिव्याप्तिवारणार्थंयदिसाध्याभावस्यविशेषणंसाकल्यं तदा वह्निमान्धूमादित्यादिसद्धेतावव्याप्तिः तत्रापितत्तद्धिपक्षावृत्तित्वावच्छिन्नाभावरूपस्यतत्तत्सपक्षवृत्तित्वावच्छिन्नाभावरूपस्यवासाध्यप्रतियोगिकाभावस्तोमस्याधिकरणाप्रसिद्धेरतआह साकल्यंसाध्याभाववतीतितथाचसाकल्यंनसाध्याभावविशेषणमतोनाऽप्रसिद्धिरितिभावः नन्वेवमपिसाध्याभाववन्निखिलांतर्गतेमहानसादौ वर्त्तमानस्याभावस्यप्रतियोगित्वंधूमादौनास्तीत्यव्याप्तितादवस्थ्यमतआह। साध्येचेति। तथाचसपक्षोमहानसादिः नसकलसाध्यस्याभाववानित्यदोषः ग्रांचस्तुव्यभि

भिन्नत्वेमानाभावादाहसाध्यवदिति हेतोःसाध्यवत्पक्षभिन्नदृष्टांतवृत्ति त्वेनाव्याप्तेराह सकलेति साकल्यंसाध्याभाववतिसाध्येचबोध्यं साध्याभावोवासाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकोग्राह्यःतेनविपक्षैकदेशनिष्ठाभावप्रतियोगिनिव्यभिचारिणिनातिव्याप्तिः नवानानाव्यक्तिसाध्यकसद्धेतावव्याप्तिः॥

चारिण्यतिव्याप्तिवारणार्थंसाध्याभाववतियावत्वविशेषणेदत्तेएवसाध्येयावत्त्वमव्याप्तिवारकतयासार्थकंभवतीत्यतः साध्याभाववत्येवसाकल्यंप्राक्योजयतिसाकल्यमित्यादिनेत्यवतारयंति तन्मंदं साध्याभाववतिसाकल्यानुक्तावव्यतिव्याप्तिवारकतयैवसाध्येसाकल्यविशेषणस्यप्रथमतःसार्थक्यसंभवात्।अन्यथागगनावृत्तिधर्मवान्द्रव्यत्वादित्यादौपटत्वादिलक्षणतत्तत्साध्यव्यक्त्यभाववद्गुणादिनिष्ठाभावप्रतियोगिनिद्रव्यत्वादावतिप्रसंगादितिध्येयं ननुसाध्यवत्यपिद्धित्वाद्यवच्छिन्नप्रतियोगिताकस्यसकलसाध्यप्रतियोगिताकाभावस्यसत्वादसंभवःकिंचसकलपदोत्तरसाध्यनाम्नासकलसाध्यप्रतियोगिताकाभाववतोनुपस्थापनात्तेनसमंसकलपदस्यकर्मधारयोप्यनुपपन्नइत्यतआहसाध्याभावोवेति। तथाचसाध्याभाववत्येवसाकल्यंदेयंनतुसाध्येपीतिभावः साध्याभाववतिसाकल्यप्रयोजनमाह तेनेति। विपक्षैकदेशः कश्चिद्धिपक्षःसाध्यनिष्ठसाकल्यस्यसाध्यतावच्छेदकावच्छिन्नाभावस्यचविवक्षायाः फलमाह। नवेति। एकव्यक्तिसाध्यकेसकलसाध्योक्तावप्यव्याप्तिरग्रेस्यास्यतीत्याशयेन नानेत्युक्तम्॥ ॥ ॥

पं.जा. अव्याप्यवृत्तीति। कपिसंयोग्येतत्त्वादित्यादावित्यर्थः यद्यप्यग्रे हेत्वभावस्यापि प्रतियोगिवैयधिकरण्यावच्छिन्नस्यैव निवेशः करणीय इत्यव्याप्यवृत्तिहेतावप्यव्याप्तिसंभव
२ ति। तथापि यथाश्रुतमूलस्य न तत्राव्याप्तिरित्यावेदयितुमव्याप्यवृत्तिहेतूक्तिः। व्यभिचारिणीति। एतद्वृक्षत्ववान् कपिसंयोगादित्यादावित्यर्थः। अभाववद्वृत्ति इति। साध्याभावे हेत्व
भावे चेत्यर्थः। अत्र च साध्याभावे प्रतियोगिवैयधिकरण्यं साध्यताघटकसम्बन्धेन प्रतियोगिनो यदनधिकरणं तद्वृत्तित्वं तेन धूमाद्यभाववतोप्ययःपिण्डादेः कालादिसंबन्धेन धूमा
दिमत्त्वेपि नातिव्याप्तिः हेत्वभावे प्रतियोगिवैयधिकरण्यं तु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वघटितं वाच्यं तेनायमात्माज्ञानादित्यादौ साध्याभाववतो
घटादेर्विषयतया हेत्वभावप्रतियोगिमत्त्वेपि नाव्याप्तिः। हेत्वभावोपीति। अपिना साध्याभावसमुच्चयस्तेन विशिष्टसत्तावान् जातेरित्यादौ नातिव्याप्तिः। यद्यपि साध्याभावोपी
त्येवक्रमानुरोधादुक्तमुचितं अपिशब्दादेव हेत्वभावस्य लाभसंभवात्। तथापि तत्प्रतियोगित्वं चेत्यग्रेतनतत्पदेन निर्दिष्टहेत्वभावपरामर्शासंभवाद्धेत्वभावप्रतियोगित्वं चेत्य
भिधाने च ग्रन्थगौरवं स्यादितीत्थमभिधानम्। प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगीति प्रतियोगिपदं प्रतियोगितावच्छेदकताघटकसंबन्धेनावच्छेदकस्य वैशिष्ट्यलाभ

पर्य

अव्याप्यवृत्तिसाध्यकव्याप्यवृत्तिसद्धेतावव्याप्तेर्व्यभिचारिणि चाव्याप्यवृत्तावतिव्याप्तेर्वारणायाभाववद्वृत्तेः प्रतियोगिवैयधिकरण[illegible]बोध्यं हेत्वभावोपि प्रतियोगि
तावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणत्वं तत्प्रतियोगित्वं च हेतुतावच्छेदकरूपेण बोध्यं तेन द्रव्यत्वादौ साध्ये विशिष्टसत्तादौ नाव्याप्तिः॥ (( एतेन ह्रदादौ कालिकादिसंबंधे

न धूमत्वाद्यवच्छिन्नस्य काष्ठादेः संयोगसंबंधेन सत्त्वेपि नाव्याप्तिः तत्प्रतियोगित्वं हेत्वभावप्रतियोगित्वं हेतुतावच्छेदकरूपेणेति हेतुतावच्छेदकसम्बन्धेनेत्यपि बोध्यम् तेनात्मभि
न्नं द्रव्यत्वादित्यादौ साध्याभाववत्यात्मनि वर्त्तमानस्य प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिव्यधिकरणस्य कालिकादिसंबंधावच्छिन्नद्रव्यत्वत्वावच्छिन्नाभावस्य प्रतियोगित्वेपि
द्रव्यत्वस्य नातिव्याप्तिः न च हेतुतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्योक्त्यैवातिव्याप्तिवारणसंभवात्। हेतुतावच्छेदकसंबंधेन प्रतियोगित्वविवक्षा व्यर्थेति वाच्यं तथा सति
निर्धूमत्वव्याप्यवान् निर्वह्नित्वादित्यादौ निर्वह्नित्वभेदमादायैव लक्षणसम्भवे निर्धूमत्वव्याप्येत्याद्युत्तरग्रन्थे वक्ष्यमाणाव्याप्त्यलग्नकतापत्तेरिति ध्येयं हेत्वभावेपि प्रतियोगिताव
च्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यविवक्षायाः फलमाह। तेन द्रव्यत्वादावित्ति। अन्यथा साध्याभाववति गुणादौ विशिष्टसत्ताभावस्य सत्तारूपप्रतियोगिसमानाधिकरण
त्वादव्याप्तिरेव स्यादिति भावः अत्र द्रव्यत्वस्य साध्यतायां सकलसाध्यप्रसिद्ध्याऽव्याप्तेरुक्तविवक्षयाप्यप्रतीकारादादिपदं तेन गुणवत्त्वादिसाध्यस्योपसंग्रहः द्रव्येतरासम राम
वेतमात्रं वा प्रकृते द्रव्यत्वमिति ध्येयं ॥ ॥ ॥ ॥ ॥ २

हेतुतावच्छेदकरूपेण हेत्वभावप्रतियोगित्वविवक्षायाः फलमाह। नवेति। सत्वादाविति द्रव्यत्वादौ साध्ये —— इत्यनुवर्त्तते। यत्रैकव्यक्तिकमिति। तथाच द्रव्यं पृथि
वीत्वादित्यादावव्याप्तिः तत्र सकलसाध्याप्रसिद्धेरित्यर्थः नन्वितो प्यस्वरसात्साध्यसामान्याभावस्यैव निवेशितत्वात्साध्ये साकल्यं नदेयमेवेत्यत आह। विपक्षो वेति। एक
व्यक्तिकमित्यनुषज्यते। तथाच यत्रैकव्यक्तिरेव साध्याभाववती तत्र गगनावृत्तिधर्मवान् गगनान्यत्वादित्यादावव्याप्तिः साध्याभाववतः साकल्याप्रसिद्धेरित्यर्थः। ननु साध्या
दिभेदेन व्याप्तेर्भेदाद्यत्रैकएव विपक्षस्तत्रत्य लक्षणे साध्याभाववति साकल्यविशेषणं नदेयमशेषत्वरूपं वा साकल्यं निवेश्यमतो दोषांतरमाह। निर्धूमत्वव्याप्य इति। निर्धू
मत्वस्य साध्यत्वे यत्रैकव्यक्तिकमित्यनेनैव गतार्थता स्यादतो व्याप्यपर्यंतनिर्धूमत्वव्याप्यस्यापि ह्रदादेः स्नेहत्वादिना साध्यत्वे वह्न्यभावस्य व्यभिचारित्वादसंग्रहीनदोषाये
त्यत उक्तम्। तत्वेन साध्य इति। निर्धूमत्वव्याप्यत्वेन साध्य इत्यर्थः। प्रत्येकमिति। तथाच हेत्वभावस्य महानसीयवह्नेः साध्याभाववत्सकलांतर्गतपर्वताद्यवृत्तित्वादव्याप्तिरि
तिभावः अत्र निरुक्तप्रतियोगिवैयधिकरण्यावच्छिन्नसाध्याभावव्यापकतावच्छेदकं निरुक्तवैयधिकरण्यावच्छिन्नयद्धर्मावच्छिन्नाभावत्वं तद्धर्मवत्त्वं व्याप्तिरित्युक्तौ तु

नवा विशिष्टसत्तात्वादिना तादृशाभावप्रतियोगिनि सत्ता दावतिप्रसंगः यत्रैकव्यक्तिकं साध्यं विपक्षो वा तत्र निर्धूमत्वादिव्याप्यतत्वेन साध्ये निर्वह्नित्वादौ चाव्या
प्तिः तत्र हेत्वभावस्य वह्न्यादेः प्रत्येकं यावद्विपक्षावृत्तित्वाद् त आह साध्यवदिति अत्रान्योन्याभावस्य साध्यवत्वावच्छिन्नप्रतियोगिताकत्वमुत्पत्तिव लभ्यं
न हि भवति नीलोघटो घटान्य इति { नैष दोष इति ध्येयं। ननु साध्यवत्प्रतियोगिकान्यत्वस्य धूमादिमति सत्वादव्याप्तिरत आह। अत्रेति। तथाच साध्यवत्पदेन निरूढलक्षणयो
पस्थापितस्य साध्यतावच्छेदकविशिष्टसाध्यवत्वावच्छिन्नप्रतियोगिताकस्यान्यपदार्थैकदेशेऽन्यत्वे तादात्म्येनान्वयात्साध्यवतिच विशिष्टसाध्यवत्वावच्छिन्नप्रतियोगि
ताकभेदासत्वान्नाव्याप्तिः गुरुधर्मस्यावच्छेदकत्वोपगमाच्च द्रव्यं पृथिवीत्वादित्यादौ द्रव्यत्वत्वविशिष्टद्रव्यत्वावच्छिन्नभेदाप्रसिद्ध्यानाव्याप्ति रितिभावः। यद्धर्मविशिष्टबोध
कपदसमभिव्याहृतेनान्यादिपदेनोपस्थापिते न्यत्वादौ तद्धर्मावच्छिन्नप्रतियोगिताकत्वप्रकारेणैव तादात्म्येनान्वयो न तु तद्धर्माश्रयप्रतियोगिताकत्वेनेत्यत्र व्युत्पत्तौ प्रमाण
माह॥ नहीति॥ तथाच तादृशव्युत्पत्त्यस्वीकारे नीलघटे घटप्रतियोगिकभेदसत्वान्नीलो घटो घटान्य इत्यपि व्यवहारः स्यादिति भावः। अत्र च द्रव्यं घटान्यदित्याद्यप्रयोगात् यन्निष्ठप्र
तियोगिताकत्वेनान्यादिपदेन भेदो बोध्यते तद्वृत्तिधर्मस्यैवानुयोगितावच्छेदकत्वात् तत एव घटो घटान्य इत्यवारणसंभवात् नीलघटत्वस्यानुयोगितावच्छेदकत्वपर्यवसानुधा
वनमिति मंतव्यं नीलो घटो घटान्य इत्येव सम्यक् पाठः तथैव प्रकृतोपयोगित्वसंगतेः घटादन्य इति पाठस्तु साध्यवदन्येत्यत्र पंचमीसमासे लुप्तविभक्तिस्मारितप्रतियोगित्वप्रकृ

पं.जा. त्यर्थे तावच्छेदकावच्छिन्नत्वस्य संसर्गमर्यादया भानमाहुरस्य कथंचित्संगमनीयः घटः पटो नेत्यादौ तु पटपदं शुद्ध्यार्थपरमेव न तु प्रकृते तद्व्यपटत्वावच्छिन्नप्रतियोगिताकपरं निपा
३ तातिरिक्तस्थल एव नामार्थयोरभेदातिरिक्तान्वयाव्युत्पन्नतया नञोपस्थापिते भेदे पटत्वावच्छिन्नप्रतियोगिताकत्वसंसर्गेणैव पटस्यान्वयसंभवात्। पटत्वावच्छिन्नप्रतियोगिताक
त्वं तु पटत्वमवच्छिन्नत्वं प्रतियोगित्वं चेति त्रितयमेव विशेष्यविशेषणभावापन्नं संसर्गः न तु वस्तुगत्या पटत्वावच्छिन्नं यत्प्रतियोगित्वं तन्मात्रं पटो नेत्यत्र पटत्वावच्छिन्नत्वस्या
प्यनुभवसिद्धत्वात् अन्यथा प्रतियोगिताव्यक्तिभिरेव तत्तद्विशिष्टबुद्ध्युपपत्तौ पटत्वादेस्तदवच्छेदकत्वमेव न स्यात् मानाभावात् अत एव केवलान्वयिग्रन्थे वह्निर्नास्तीत्यत्र व
ह्नित्वं तदवच्छिन्नत्वं प्रतियोगित्वं च संसर्गमर्यादया भासत इति स्वयमप्युक्तं इत्थमेव च प्रमेयं नास्ति कंबुग्रीवादिमान्नास्तीत्यादिशाब्दबोधानां संसर्गकोटाविव प्रतियोगिता
यां प्रमेयत्वावच्छिन्नत्वावगाहितया भ्रमत्वं संसर्गप्रकारसाधारणविशेष्यविशेषणभावस्यैव भ्रमत्वघटकत्वात् अन्यथा स्वरूपसम्बन्धेन प्रमेयत्वाद्यवच्छिन्नप्रतियोगित्व
स्यालीकतया खंडतत्संबन्धेन प्रमेयस्याभावे धर्मिण्यन्वयासंभवेन भ्रमत्वानुपपत्तेः सदुपरागेणाप्यसतः संसर्गमर्यादया भानस्यानंगीकारात् क्रमेण पटत्वावच्छिन्नप्र
तियोगित्वसंबन्धेन चाभावे प्रमेयस्य सत्त्वेन तादृशसम्बन्धेन भ्रमत्वस्य वक्तुमशक्यत्वात् पटत्वादेरन्वयितानवच्छेदकतया तदवच्छिन्नप्रतियोगित्वसम्बन्धेन प्रमेयत्वा
दिविशिष्टस्यान्वये निराकांक्षत्वाच्च। अन्यथा घटवत्यपि घटो नास्तीत्यादेः प्रमाणत्वापत्तेः तत्तद्घटत्वावच्छिन्नप्रतियोगित्वसम्बन्धेन घटविशिष्टस्य घटविशेषाभावस्य तत्र स
त्वात् एतेन सत्तासमवायिन्यपि गुणादौ विशिष्टसत्तात्वावच्छिन्नस्य समवायेनासत्त्ववत् घटत्वावच्छिन्नप्रतियोगित्वसम्बन्धेन घटत्वावच्छिन्नवतोऽपि घटाद्यभावस्य न तादृ
शसंबन्धेन प्रमेयत्वावच्छिन्नवत्त्वमतः प्रमेयं नास्तीत्यादौ घटत्वावच्छिन्नप्रतियोगित्वसम्बन्धेन प्रमेयत्वावच्छिन्नस्यैवाभावांशे भ्रमत्वमित्यपि प्रत्युक्तं घटत्वादेरन्वयितानव
च्छेदकतया तदवच्छिन्नप्रतियोगितासम्बन्धेन प्रमेयत्वविशिष्टस्यान्वये निराकांक्षतया तथाशाब्दस्यासंभवादिति ध्येयम्। नीलो घटो नास्तीत्यादौ तु नीलघटत्वस्यान्वयितावच्छेदकत्वेन तादृशधर्मावच्छिन्नप्रतियोगित्वमेव संसर्गो न तु नीलत्वघटत्वादिप्रत्येकावच्छिन्नप्रतियोगित्वं नीलपटस्य पीतघटस्य वाधिकरणे तादृशप्रयोगापत्त्यापत्तेः नीलोप
लक्षितस्य घटत्वमात्रस्यान्वयितावच्छेदकत्वे तु घटत्वावच्छिन्नप्रतियोगित्वमेव तथा संयोगेन घटो नास्तीत्यादौ तु तृतीयाविभक्तेर्नावच्छिन्नत्वमर्थः संसर्गीभूतप्रतियोगितायां त
दन्वयासंभवात् किंत्ववच्छिन्नप्रतियोगिताकत्वं प्रतियोगित्वमात्रं वावच्छिन्नत्वसंसर्गेण संयोगादेः तत्रान्वयादेव विशिष्टलाभसंभवात् न चैवं संयोगेन घटाभावस्यैव समवाये
न घटविशिष्टद्रव्यत्वाभावतया समवायेन कपाले घटो नास्तीति व्यवहारापत्तिः तृतीयान्तसमभिव्याहारस्थले तदुपस्थाप्यप्रतियोगित्वस्यैव संसर्गतयाव्युत्पन्नत्वात् समवायावच्छिन्नघटप्रतियोगिताकाभावस्य च कपाले विरहात् अस्तु वा घटत्वावच्छिन्नस्यैव संयोगसंबधावच्छिन्नत्वस्यापि प्रतियोगितांशे संसर्गमर्यादयैव भानं तृतीयान्तस राम ३

मभिव्याहारस्यनियामकत्वाच्चनातिप्रसंगः घटानधिकरणंभूतलमित्यादौ तुलक्षण याधिकरणपदमेव घटाधिकरणार्थकं घटपदं तात्पर्यग्राहकं अन्यथानधिकरणपदेनाधिकरणसामान्यभिन्नत्वोक्तौभूतलेतस्यबाधःस्यात् नचघटान्वितस्यैवाधिकरणभेदस्तत्रनञाबोधनीयः समासांतर्गतनञामुत्तरपदार्थमात्रान्वयित्वव्युत्पत्तेः अन्यथानीलाघटोघटइत्यादौनीलघटान्यस्यघटत्वंनीलाप्रमेयः पटइत्यादौचनीलप्रमेयान्यस्यपटत्वंप्रतीयेत् वस्तुतःससम्बन्धिकपदस्थलेव्युत्पत्तिवैचित्र्यात्। प्रतियोगितानवच्छेदकघटानधिकरणंभूतलमित्यादौघटाद्यन्वितस्यैवाधिकरणादेर्भेदोभासते अन्यत्रत्रिपदतत्पुरुषानुपगमेपिघटस्यनाधिकरणंप्रतियोगितायानावच्छेदकमित्यादिरीत्यात्रिपदतत्पुरुषेण विशिष्टलाभसंभवादित्तितुपरमार्थः पीतःशंखोनास्तीत्यादौशाब्दबोधस्तुनशंखत्वावच्छिन्नतयाप्रतियोगित्वमवगाहते तन्मात्रस्यान्वयितानवच्छेदकत्वात् शंखवत्तयानिश्चितेधर्मिण्यपितादृशःप्रयोगात् परंतुपीतशंखत्वावच्छिन्नप्रतियोगितात्वेनसंसर्गमर्यादयाप्रतियोगित्वमवगाहते नञादिपदानां यद्धर्मविशिष्टवैशिष्ट्यावगाहित्वोपस्थाप्याभावधर्मिकान्वयबोधजनकत्वंतद्धर्मावच्छिन्नप्रतियोगितात्वेनप्रतियोगितासंसर्गकान्वयबोधजनकत्वव्युत्पत्तेः द्वयोरुक्तविशेषः यद्घटोनास्तीत्यादिशाब्देसांसर्गिकीप्रतियोगित्वावगाहिताप्रसिद्धेनघटत्वावच्छिन्नप्रतियोगितात्वेननिरूपितापीतःशंखोनास्तीत्यादौतुपीतशंखत्वावच्छिन्नप्रतियोगितात्वेनाप्रसिद्धेनैवेत्यादिकं बहुतर

१ नापीति। साध्यसमानाधिकरणं यस्य यदधिकरणानधिकरणंसाध्यंतत्वं। साध्यनिष्ठासामानाधिकरण्यप्रतियोगित्वम्। साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमितियावत्। तदन धिकरणत्वमित्यर्थः। साध्यवद्भिन्नस्यसाध्यनिष्ठाधेयत्वानिरूपकत्वात्तद्वृत्तौनातिप्रसंगः॥ { यूहनीयं॥ इतिजागदीशीपंचलक्षणीसंपूर्णा ॥ ॥

श्रीगणेशायनमः॥ साध्यासामानाधिकरण्यपदस्यसाध्यवद्भिन्नवृत्तित्वार्थकत्वेसाध्यवैयधिकरण्येत्यादिउत्तरलक्षणेनपौनरुक्त्यापत्तिरतोव्याचष्टेसाध्यमसमानाधिकरणं यस्येतितत्वमितिपरेणान्वयः वन्हिमात्रस्यैवव्यधिकरणतत्तद्धूमसमानाधिकरणत्वात् वन्हिमान्धूमादित्यादावव्याप्तेराह। यदधिकरणेति। यदधिकरणमनधिकरणंयस्येतिव्युत्पत्त्यायस्याधिकरणंसाध्यानधिकरणंतत्वमित्यर्थः तत्तद्धूमाधिकरणंतुनवन्हिसामान्यानधिकरणमतोनाव्याप्तिरितिभावः ननुघटादिस्वरूपंयत्किंचिद्व्यक्त्यधिकरणंसाध्याभूतधूमाद्यनधिकरणंतद्व्यक्तित्वानधिकरणत्वं वह्न्यादेरप्यतोधूमवान्वन्हेरित्यादावतिव्याप्तिः यद्यद्व्यक्त्यधिकरणंसाध्यानधिकरणंतत्तद्व्यक्तित्वानधिकरणत्वोक्तौतुमहागौरवमतआह। साध्यनिष्ठेति। साध्यनिष्ठाभावप्रतियोगित्वसद्धेतौरप्यस्तीत्यतःसामानाधिकरण्याभावउक्तः नचसाध्यनिष्ठस्यसामानाधिकरण्याभावस्यप्रतियोगित्वंसामानाधिकरण्यएवनतुवह्न्यादाविस्यसद्धेतावतिव्याप्तिःसाध्यनिष्ठाभावप्रतियोगिवृत्तित्वनिरूपकाधिकरणवृत्तित्वस्यविवक्षितत्वात् वस्तुतःअसमानाधिकरण्यंसामानाधिकरण्यसंबंधेनाभावद्

सिं.जा नचैवंद्रव्यंविशिष्टसत्वादित्यादावव्याप्तिः सामानाधिकरण्याभावस्याव्याप्यवृत्तित्वेनसाध्यनिष्ठत्वात् एतदस्वरसेनैववाकल्यांतरानुसरणादित्यपरे नन्वेवमपिवन्हिमा-
४ न्धूमादित्यादिविषमव्याप्तेहेतावव्याप्तिः महानसीयवन्हिनिष्ठस्यपर्वतवृत्तित्वाद्यभावस्यप्रतियोगीभूतंयदाधेयत्वंतन्निरूपकेपर्वतादौधूमादेर्वर्तमानत्वात्साध्यसामा-
न्यनिष्ठाभावप्रतियोग्याधेयतानिरूपकाधिकरणवृत्तित्वोक्तौचमहागौरवमतआह। साध्यनिष्ठाधेयत्वेति। अत्राधेयत्वंसाध्यताघटकसंबंधेनग्राह्यं तेनरूपवान्महाकाल
त्वादित्यादौसंबंधसामान्येनरूपनिष्ठाधेयत्वानिरूपकेगगनादौहेतोरवृत्तित्वेपिनातिव्याप्तिः हेतुवृत्तौसाध्यवद्भिन्नवृत्तौ ननुसाध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्व
मवश्यंहेतुताघटकसम्बन्धेनवाच्यमन्यथावह्निनिष्ठाधेयत्वानिरूपकेस्वावयवेसमवायादिनाधूमादेःसत्वाद्व्याप्त्यापत्तेः तथाचसत्तावान्द्रव्यत्वाद्भूमाद्वित्यादावव्याप्तिःसा
ध्यनिष्ठाधेयत्वानिरूपकेजात्यादौसमवायेनसंयोगेनवावृत्त्यप्रसिद्धेः किंचद्रव्यंविशिष्टसत्वादित्यादावव्याप्तिः द्रव्यत्वनिष्ठाधेयत्वानिरूपकगुणादिवृत्तित्वस्यविशिष्टस
त्तायांसत्वादित्यतआह साध्यनिष्ठेति। धूमनिष्ठाधेयत्वानिरूपकेजलादौवह्न्याद्यधिकरणत्वाभावसत्वाद्व्यभिचारिण्यतिव्याप्तिरतोव्यापकेति व्यापकत्वंतुप्रतियोगिवैयधि

साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वमितिनिष्कर्षस्तेनसत्तावान्द्रव्यत्वादित्यादौनदोषः।साध्यवैय
धिकरण्यंसाध्यवद्भिन्नाधिकरणत्वं॥ {करण्याघटितमेवग्राह्यं।तेनसंयोगेनवह्न्यधिकरणत्वस्याव्याप्यवृत्तितयातदभावस्यतत्प्रायः पिंडवृत्तित्वेपिनातिव्याप्तिः वह्न्यधि
करणत्वगगनोभयत्वावच्छिन्नाभावस्यधूमनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वादतिव्याप्तिरतःसामान्यपदं तथाचहेतुतावच्छेदकसंबंधावच्छिन्नयद्धर्मावच्छिन्ना रतो २
धिकरणत्वसामान्याभावत्वेनसाध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वंतद्धर्मवत्वमर्थः तेनवन्हिनिष्ठाधेयत्वानिरूपकाधिकरणजलादौकालिकसंबन्धेनधूमाधि
करणतायाःसत्वेपिनाव्याप्तिः। नवावन्ह्यधिकरणत्वाभावस्यापिप्रमेयत्वादिनाधूमनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वेप्यतिव्याप्तिः नचहेतुतावच्छेदकसंबंधेनय
द्धर्मावच्छिन्नाभावत्वेनतादृशाधिकरणताव्यापकत्वमित्यस्यैवसम्यक्त्वेधिकरणत्वाभावपर्यंतानुप्रवेशोव्यर्थइतिवाच्यम्। वृत्त्यनियामकसंबन्धेनहेतुतायामव्याप्तिप्रसं-
गात् तादृशसबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः अस्माकंतुतादृशसंबंधेनयद्धेतुसंबंधित्वंतस्यस्वरूपसंबंधा वच्छिन्नाभावप्रतियोगित्वमादायलक्षणसंभवात् किं-
चाधिकरणत्वाप्रवेशेवह्न्यादेःसाध्यत्वेसंयोगादिसंबंधेनरूपादिहेतावतिव्याप्त्यापत्तिः संयोगेनरूपाद्यभावस्यकेवलान्वयितयावह्निनिष्ठाधेयत्वंनिरूपकाधिकरणत्वव्यापक- राम
त्वादितिभावः।साध्यवद्भिन्नेति।अत्रापिसाध्यवद्भिन्नत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वमितिनिष्कर्षोबोध्यः तेनसत्तावान्द्रव्यत्वादित्यादौनाव्याप्तिः॥ ॥ ४

४ + साध्यानधिकरणानधिकरणत्वमित्यत्र

ननु प्रागुक्तस्यार्थस्य शब्दान्तरेणाभिधानमनुवादः स चात्रासंभवी साध्यं यदधिकरणानधिकरणं तत्त्वानधिकरणत्वस्य साध्यवद्भिन्नवृत्तित्वानधिकरणत्वस्य च प्रागुक्तस्य साध्यानधिकरणानधिकरणत्वशब्देनाबोधनादत आह। चरमेति। तत्ताधिकरणत्वाभावे तत्ताभावस्याप्रवेशादेर्पर्य्यसंभवीत्यत उक्तं। अनतिप्रयोजनकतयेति। तथा च प्रकृतलक्षणवाक्यस्य साध्यं यदधिकरणानधिकरणं तत्त्वाभावे साध्यस्य यदनधिकरणं तद्वृत्तित्वाभाव एव च तात्पर्यात् प्रागभिप्रेतार्थस्य शब्दान्तरेणाभिधानमेवानुवादः स चात्र संभवत्येवेति भावः। साध्यमित्यादि साध्यानधिकरणेत्यादौ साध्यवर्त्तिनञ्द्वयप्रयासेन चरमाधिकरणत्वांशेन सहान्वयादेव तल्लाभदूषणाशयाकेवलान्वयिनीति। अव्याप्तिरितिपरेणान्वयः अव्याप्तेर्हेतुमाह। साध्यनिष्ठेति। नानाव्यक्तिसाध्यके चेति मूलोक्तं धूमहेतुमभिप्रेत्य तेन शब्दवान् गगनत्वादित्यादौ नानाव्यक्तिसाध्यकाव्याप्तिविरहेपि न क्षतिः न्यूनतां परिहरति। क्वचिदिति विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिरित्यर्थः विशिष्टधर्मावच्छिन्नाधिकरणत्वस्यैवतदवच्छिन्नाधेयत्वस्यानतिरिक्तत्वादिति भावः। यत्किंचिदि। साध्य

चरमाधिकरणत्वांशस्यानतिप्रयोजनकतया तदपहाय द्वयमेकोक्त्या अनूद्य दूषयति तदुभयमपीति। साध्येत्यादेः साध्यं यदधिकरणानधिकरणं तत्त्वाभावः। साध्यस्य यदनधिकरणं तद्वृत्तित्वाभावश्चार्थः। तत्र केवलान्वयिनि साध्यनिष्ठाधेयत्वानिरूपकाधिकरणाप्रसिद्ध्या नानाव्यक्तिसाध्यके च एकसाध्यव्यक्तिनिष्ठाधेयत्वानिरूपकाधिकरणत्वं। साधनाधिकरणव्यक्त्यन्तरस्येत्यव्याप्तिः। क्वचिद्व्यभिचारिण्यतिप्रसंगश्चाद्ये। द्वितीये च साध्यवेयधिकरण्ये यदि साध्यवत्तावच्छिन्नप्रतियोगिताकोभेदो विवक्षितस्तदा केवलान्वयिनि यदि च यत्किंचित्साध्यवद्व्यक्तिभेदस्तदा नानाधिकरणसाध्यके सर्वत्राव्याप्तिः। केचित्तु साध्यसामानाधिकरण्यंहेतुतावच्छेदकसंबन्धेन। हेत्वधिकरणे तेनैव सम्बन्धेन साध्यवद्वृत्तित्वाभावस्तदधिकरणभिन्नत्वमर्थस्तेन धूमस्य। { वक्तत्वद्व्यक्तित्वावच्छिन्नदृत्यर्थः। नानाधिकरणसाध्यकेति। यत्र साध्यतावच्छेदकावच्छिन्नाधिकरणं नाना तत्रेत्यर्थः। तेन कस्याश्चिदपि वन्हिव्यक्तेर्नानाधिकरणवृत्तित्वविरहेपि न वन्हिसाध्यकधूमादेरसंग्रहः। सर्वत्र केवलान्वयिनि तद्भिन्ने च सार्वभौममतमुत्थापयति। केचित्त्विति। हेत्वधिकरणद्वृतिसप्तम्यर्थो वच्छेद्यत्वं तच्च साध्यवद्वृत्तित्वाभावेन्वितं। तेनैवेति। हेतुतावच्छेदकसंम्बन्धेनैवेत्यर्थस्तस्य च साध्यवद्वृत्तित्वेन सहान्वयः साध्यवत्वमपि येन संबंधेन येन रूपेण साध्यता तत्संबंधेन तद्रूपावच्छिन्नवत्त्वं बोध्यम्। तेन समवायेन वन्हेः साध्यत्वे धूमे विशिष्टसत्तसाध्यके सत्तादौ नातिव्याप्तिः। तदधिकरणभिन्नत्वमिति। तदत्यन्ताभाव स्त्वोक्तोद्रव्यं सत्त्वादित्यादावेतिव्याप्तिः गुणाद्यवच्छेदेन द्रव्यवृत्तित्वाभावस्यैव द्रव्यावच्छेदेन सत्तायामभावसत्त्वादतो भिन्नत्वपर्यन्तानुसरणं भेदस्तु नाव्याप्यवृत्तिः तदव्याप्यवृत्तित्वे तु तादृशवृत्तित्वाभाववती यावती व्यक्तिस्तत्तद्भेदकूटवत्त्वं वक्तव्यमिति भावः॥ ७॥ ॥

+ तथा च यत्किंचित्साध्यवद्भेदको। तादृशभेदप्रसिद्धावपि तदधिकरण [illegible] वृत्तित्वस्यैवाव्यत्वेसत्वात्। दव्याप्तिः। तादृशकेवलान्वयिनि भिन्नवन्ह्यादिसाध्यकेऽव्याप्तिः इति भावः।

सिं·जा· हेतुतावच्छेदकसंबन्धेनहेत्वधिकरणइत्यस्यफलमाह। स्वावयवेसंयोगेनेति। अवृत्तावपिनक्षतिरित्यन्वयः। तथाचतादृशसम्बन्धेनहेत्वधिकरणत्वाप्रवेशेस्वावयवावच्छे
५ देनधूमस्यवह्निमत्संयुक्तत्वाभाववत्वाद्वह्निमान्धूमादित्यादावव्याप्तिःस्यान्नपुनरसंभवः इदंवाच्यंज्ञेयत्वादित्यादिकेवलान्वयिनिलक्षणसंभवादितिभावः अत्रचोत्पत्तिका
लावच्छिन्नेघटेपृथिवीत्वेरूपवद्वृत्तित्वंनेत्यादिप्रतीत्याघटाद्यवच्छेदेनपृथिवीत्वादौरूपवद्वृत्तित्वाभावाभ्युपगमेहेत्वधिकरणनिष्ठमवच्छेदकत्वंनिरवच्छिन्नंग्राह्यंतेनरू
पवान्पृथिवीत्वादित्यादौनाव्याप्तिः। तत्रघटनिष्ठावच्छेदकत्वस्योत्पत्तिकालेनावच्छेदादितिध्येयं। तेनैवेत्यस्यफलमाह। वह्निमतिचसमवायेनेति। हेतुतावच्छेदकसं
बन्धेनसाध्यवद्वृत्तित्वानुक्तौसम्बन्धसामान्येनहेत्वधिकरणावच्छेद्यसाध्यवद्वृत्तित्वसामान्याभावेननिवेशः साधनाधिकरणाद्यवच्छेद्यतादृशाभावस्याप्रसिद्धेः। किंतु
यत्किंचित्सम्बन्धेनसाध्यवद्वृत्तित्वाभावःप्रवेशनीयः तथाचहेत्वधिकरणपर्वताद्यवच्छेदेनधूमादौवह्निमत्समवेतत्वाद्यभावसत्वादसंभवस्स्यात् यदितेनैवसम्बन्धेनसाध्य
वद्वृत्तित्वप्रवेशोनस्यादितिभावः। ननुहेत्वधिकरणावच्छेद्यत्वविशिष्टस्यसाध्यवद्वृत्तित्वाभावस्याधिकरणाप्रसिद्ध्यालक्षणमिदमसंभवितद्धिकरणस्यैवतन्निष्ठधर्मावच्छेद
कतयागगनजलत्वादौवह्निमत्पर्वतसंयुक्तत्वाभावस्यधूमवत्पर्वतानवच्छेद्यत्वादतआह। तादृशाभावश्चेति। हेत्वधिकरणावच्छेद्यसाध्यवद्वृत्तित्वाभावश्चेत्यर्थः। सम्बन्धा

स्वावयवेसंयोगेनवह्निमतिचसमवायेनावृत्तावपिनक्षतिःतादृशाभावश्चसम्बन्धान्तरेणतत्रैववर्त्तमानेसुलभः।

न्तरेणहेतुतावच्छेदकसंबन्धान्यसम्बन्धेन तथाचहेतुमत्पर्वतावच्छेद्यत्वविशिष्टस्यवह्निमत्संयुक्तत्वाद्यभावस्याधिकरणत्वंपर्वतीयरूपादावेवप्रसिद्धमितिभावः। यद्यपिरूपादौ
वह्निमत्संयुक्तत्वाद्यभावस्यव्याप्यवृत्तित्वात् तत्रपर्वतादिकंना वच्छेदकंभावाभावयोरेकत्रवृत्त्यर्थमेवावच्छेदकस्वीकारादित्यप्रसिद्धितादवस्थ्यं नचमहानसादिसंयुक्ते
कालिकादिसम्बन्धेनपर्वतादिनिष्ठघटादौवह्निमत्संयुक्तत्वाभावस्यपर्वताद्यवच्छेद्यत्वप्रसिद्ध्यानदोषइतिवाच्यम्। इत्थमपिएतद्रूपवानेत[illegible]दित्यादावेत[illegible]धिकरणा द्रसा
वच्छेदेनएतद्रूपवत्समवेतत्वाभावस्याप्रसिद्धेर्दुर्वारत्वात् तथापिपर्वतावच्छेदेनतदीयरूपेनवह्निमत्संयुक्तत्वमित्यादिप्रतीत्याव्याप्यवृत्तेरवच्छेदकत्वस्वीकारादित्यमभि
धानेहेतुतावच्छेदकसंबंधेनसाध्यवद्वृत्तित्वाभावविशिष्टस्ययस्याधिकरणंतदन्यत्वेवाग्रंथतात्पर्यं तथाचव्याप्यवृत्तेरवच्छेदकत्वासत्वेपिसाध्यवद्वृत्तित्वाभावविशिष्टस्य।
यस्याधिकरणंतद्भिन्नत्वमादायैवलक्षणसंगतिः नचवस्तुगत्यासाध्यवद्वृत्तित्वाभावविशिष्टस्ययस्याधिकरणंहेत्वधिकरणंतदन्यत्वोक्तौवह्निमान्धूमादित्यादावव्याप्तिः राम
स्वावयवावच्छेदेनवह्निमत्संयुक्तत्वाभाववतोधूमस्याधिकरणतायाःसाधनवत्पर्वतादौसत्वात् साध्यवद्वृत्तित्वाभावविशिष्टयद्वृत्तित्वावच्छिन्नाधिकरणत्व ॥ ५

एतादृशेनैमात्रएतादृशाधिकरणत्वस्यपदस्य
वैनैरूमतः। नाव्याप्तिः।

हेतुमतस्तदन्यत्वोक्तौतुवन्हिमान्धूमादिदंवाच्यंज्ञेयत्वादित्यादौ सर्वत्रैवासंभवः साध्यवदसंयुक्तत्वादि विशिष्टतत्तद्रूपादिव्यक्तित्वस्यगुरुतयाप्रमेयरूपत्वावच्छिन्नायाःप्रतियोगितायाइवतदवच्छिन्नाधिकरणताप्रसिद्धेः केवलस्यातिप्रसंगएवविशिष्टधर्मस्याधिकरणतानिरूपकतावच्छेदकत्वकल्पनादितिवाच्यं सार्वभौमानांमते प्रतियोगितायाइवाधिकरणतायाअपिगुरुधर्मावच्छेद्यत्वोपगमात् अन्यथासमवेतत्वादिकमपेक्ष्यसत्तावत्समवेतत्वस्यगुरुतयासाध्यवद्वृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावप्रसिद्ध्यासत्तावान्द्रव्यत्वादित्यादावव्याप्तिप्रसंगात् ननुसाध्यसामानाधिकरण्यवतोनतदभाववत्त्वमतोद्रव्यंसत्वादित्यादौव्यभिचारिण्यतिप्रसंगइत्यतआह। व्यभिचारिणस्त्विति। तादृशीति हेतुताघटकसम्बन्धेन हेतुमतीत्यर्थः। तादृशाभाववत्त्वंसाध्यवद्वृत्तित्वाभाववत्त्वं अत्रैवानुभवंप्रमाणयति सत्तायामित्यादि एवंसत्तायामपिद्रव्यत्वसामानाधिकरण्यविरहेविशिष्टसत्वइति। विशिष्टसत्वशब्दप्रतिपाद्यहेतावित्यर्थः यथाश्रुतेगुणकर्मान्यत्वविशिष्टसत्ताव्यक्तावव्याप्त्याशंकायामुत्तरग्रंथेनतदनिरासादसंगत्यापत्तेः। अतिरिक्तत्वादिति। विशेष्यविशेषणाभ्यांभिन्नत्वादित्यर्थः। तथाचगुणादिकंनहेत्वधिकरणमतोनाव्याप्तिः उभयत्वमपिएकविशिष्टापरत्वमेवतच्चातिरिक्तमेवनातःस्पर्शवान्मूर्त्तत्वभूतत्वोभयस्मादित्यादावव्याप्तिरितिभावः यद्यपिहेतुतावच्छेदकविशिष्टहेत्वधिकरणावच्छेदेनेत्युक्तावपिविशिष्टसत्त्वादिहेतौनाव्याप्तिः नचधूमाधिकर

व्यभिचारिणस्तुव्यभिचारनिरूपकाधिकरणएवतादृशितादृशाभाववत्त्वं। सत्तायांगुणेनद्रव्यत्वसामानाधिकरण्यमित्यनुभवात्। नचैवंगुणकर्मान्यत्ववि
सत्वे शिष्टत्वेऽव्याप्तिः। विशिष्टस्यातिरिक्तत्वात्॥

यामहानसाद्यवच्छेदेनपर्वतीयादिधूमेवन्हिमत्संयुक्तत्वाभावस्यचालनीन्यायेनसत्त्वादव्याप्तिः महानसादेरपिकालिकादिसम्बन्धेनपर्वतीयधूमाधिकरणत्वात् तत्रसाध्यवद्वृत्तित्वाभाववत्तायामवच्छेदकत्वादितिवाच्यं स्वावच्छिन्नाधिकरणावच्छेद्यसाध्यवद्वृत्तित्वाभाववद्वृत्तिधर्मवत्त्वमित्यस्यैवफलितार्थस्यतत्तद्धूमत्वधर्ममादायैवलक्षणसंभवेनधूमत्वस्यहेतुतावच्छेदकत्वेपिक्षत्यभावात् तथापिविशिष्टस्यातिरिक्तत्वात्ततएवाव्याप्तिवारणसंभवेहेतुतावच्छेदकावच्छिन्नाधिकरणत्वप्रवेशेगौरवमसंभवोवाविशिष्टनिरूपकाधिकरणत्वाप्रसिद्धेः एवंधूमत्वादेर्व्याप्यतानवच्छेदकत्वेतादृग्रूपेणकथायांहेतोरुपन्यासोनस्यादित्याशयः ननुविशिष्टसत्वस्यातिरिक्तत्वेमानाभावः नचगुणोविशिष्टसत्तावानितिप्रतीत्यभावएवमानं। गुणस्यविशिष्टनिरूपिताधिकरणत्वविरहादेवतादृशप्रतीत्यसंभवात् नचविशिष्टनिरूपितमधिकरणत्वंयद्यतिरिक्तंतदाविशिष्टमेवातिरिक्तमस्तु विशिष्टाधिकरणतायाःकॢप्ताधिकरणतास्वरूपत्वाभ्युपगमात् किंचविशिष्टस्यातिरिक्तत्वेद्रव्यंविशिष्टसत्तावदितिनिर्णयदशायामपिद्रव्यंनसत्तावदितिप्रत्ययप्रसंगः सत्ताभावबुद्धिंप्रतिसत्तानिश्चयस्यैवविरोधितयातदसत्त्वात्। ॥ ॥

व्या

सिं-जा स्वातंत्र्येणविरोधितांतरकल्पनेगौरवात् एवंविशेषणविशेष्योभयग्राहकसामग्रीविरहेपिविशिष्टग्रहप्रसंगःतदुभयग्राहकसाम(ग्र्या)विशिष्टस्यग्रहेहेतुत्वकल्पनेपिगौरवांतरं
६ स्फुटमेवेत्यत आह।अनतिरिक्तत्वेत्विति।गुरवस्तुविशिष्टस्यातिरिक्तत्वादितिग्रंथस्यविशिष्टनिरूपितताधिकरणत्वस्यातिरिक्तत्वादित्यर्थः। तथाचहेतुतावच्छेदकविशि
ष्टहेत्वधिकरणावच्छेदेनतादृशवृत्तित्वाभाववत्त्वमपिनिवेश्यमतोनाव्याप्तिरित्याशयः ननुविशिष्टाधिकरणत्वंयदिनातिरिक्तंविशिष्टसत्तावानितिप्रतीतेःप्रत्येकनिरूपि
ताधिकरणताद्वयावगाहित्वेनैवोपपत्तेः अन्यथाविशेषणाभावनिर्णयदशायामपिविशिष्टसत्तावत्त्वप्रतीत्यापत्तेः विशिष्टसत्ताबुद्धौविशेषणाभाववत्ताज्ञानस्यप्रतिबं
धकतायाःस्वातंत्र्येणकल्पनापातादित्युच्यते तदाप्याह। अनतिरिक्तत्वेतीतिप्राहुःविशेषणेति।विशेषणंतुगुणकर्मान्यत्वंविशेष्यंसत्तातयोःसामानाधिकरण्यात्मकसंबं
धस्यैवेत्यर्थःसाक्षात्संबन्धेननत्स्यव्यभिचारित्वादाह।परंपरयेति।अवच्छेदकताख्यस्वरूपसंबन्धेनेत्यर्थः।सत्वगुणकर्मान्यत्वयोर्द्रव्येएवसामानाधिकरण्यमितिप्रतीत्यावः
च्छेदकतासम्बन्धेनतदुभयसामानाधिकरण्यस्यद्रव्यएवसत्वान्नव्यभिचारइतिभावः।नन्वेवंज्ञेयत्वाधिकरणपटाद्यवच्छेदेनवाच्यत्ववद्वृत्तित्वाभावस्यपटीयरूपादावे

अनतिरिक्तत्वेतुविशेषणविशेष्यसम्बन्धस्यैवपरंपरयाव्याप्यत्वात्।केवलान्वयिनिचाव्याप्तेरभिधानंद्वितीयलक्षणाभिप्रायेणेत्याहुस्तच्चिंत्यं।सत्तायांगुणे
नद्रव्यत्वसामानाधिकरण्यमिति। {वसत्वात्तदधिकरणभिन्नत्वमस्त्येवज्ञेयत्वादिहेतोरित्यग्रेकेवलान्वयिन्यव्याप्तिप्रदर्शनमसंगतमतआह।केवलान्वयिनीति
द्वितीयेति। तत्रसाध्यवद्भिन्नस्याप्रसिद्धत्वादितिभावः यद्यपीदंवाच्यंप्रमेयादित्यादौतादात्म्येनकेवलान्वयिनिहेतौप्रथमलक्षणेव्याप्तिःसंभवति प्रमेयावच्छेदेनवाच्य
भावस्यकु त्ववत्तादात्म्यकत्वेविरहेणाऽप्रसिद्धेः।नचघटाद्यवच्छेदेनवाच्यत्ववत्तादात्म्यविरहोघटत्वादौसुलभःतथासति। घटत्वंघटेनवाच्यमितिप्रतीत्यापत्तेः तथापिस्वाधिकर
त्राधि णनिरूपितहेतुतावच्छेदकसम्बन्धेनसाध्यवद्वृत्तित्वाभावोत्रलक्षणघटकइत्यभिप्रायेणद्वितीयलक्षणाभिधानंस्वपदस्यतत्तत्साधनव्यक्तिपरतयातादात्म्येनपटात्मक
हेत्वधिकरणीभूतपटव्यक्तिनिरूपिततादात्म्येनवाच्यत्ववत्तादात्म्यकत्वाभावस्यपटावच्छेदेनपटत्वादावेवप्रसिद्धेः।वस्तुतस्तुकेवलान्वयित्वं वृत्तिमदत्यंताभावाप्र
तियोगित्वमात्रंनत्ववच्छेदकगर्भं।तथाचतादात्म्येनकिंचिदपिप्रमेयंनकेवलान्वयीतिद्वितीयलक्षणेएवतादृशकेवलान्वयिन्यव्याप्तिसंभवात् यथाश्रुतमेवसम्य
गितिध्येयं।नव्यास्तुकेवलान्वयिनिचाव्याप्तेरितिकेवलान्वयिसामान्येव्याप्तेरभिधानंद्वितीयलक्षणाभिप्रायेणेत्यर्थः प्रथमलक्षणेयत्किंचित्केवलान्वयिनितादात्म्येनप्र
मेयादिहेताव्व्याप्तावपिनक्षतिरित्याहुःसत्तायांगुणेनद्रव्यत्वसामानाधिकरण्यमितिप्रतीतिः सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यस्यावच्छेदकत्वाभावंगुणात्वावगाहते दित्यत्रस

६ मानाकारकचौवंछिष्ठातयति।

तदधिकरणस्यैव तन्निष्ठधर्मावच्छेदकत्वस्य बाधकसत्वात्

द्रव्यत्वे गुण इति न तूक्तप्रतीतेः गुणावच्छेदेन द्रव्यत्वे पृथिवीत्वसामानाधिकरण्याभावो विषयः गुणस्य द्रव्यत्वानधिकरणतया तन्निष्ठपृथिवीवृत्तित्वाभावावच्छेदकत्वासंभवात् किं-
तु द्रव्यत्वनिष्ठं यत्पृथिवीत्वसामानाधिकरण्यं तदवच्छेदकत्वाभाव एव गुणे विषय इति तद्द्वितीयमपि इति भावः। अवच्छेदकत्वाभावमिति। प्रात्यक्षिकप्रत्ययाभिप्रायेणे-
दं सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमित्यादिशाब्दस्थलेऽवच्छेदकत्वोपस्थापकपदान्तरविरहात्तदभावस्य गुणादौ बोधयितुमशक्यत्वात्। किंतु सत्तानिष्ठद्र-
व्यत्वसामानाधिकरण्यं न गुणावच्छेदेनेत्याकारक एव तत्र बोधः गुणादावित्यत्र सप्तम्यर्थस्य नञर्थेऽन्वयादिति ध्येयं नन्वेवं तादृशप्रतीतेः सामानाधिकरण्याभावविषय-
कत्वमनुभवसिद्धं विरुध्येत सामानाधिकरण्यस्य व्याप्यवृत्तित्वेन तदवच्छेदकत्वाप्रसिद्ध्या तादृशावच्छेदकत्वाभावविषयकप्रतीतेर्भ्रमत्वापत्तिश्च स्यादत आह॥
परंपरासम्बन्धेनेति। निरूपकताख्यस्वरूपसम्बन्धेनेत्यर्थः। न त्ववच्छेदकताख्यस्वरूपसम्बन्धेनेत्यर्थः तथा सति सत्तायां द्रव्ये न द्रव्यत्वसामानाधिकरण्यमिति प्रती-
तिप्रसंगात्। सामानाधिकरण्यस्य व्याप्यवृत्तया कुत्राप्यवच्छेदकत्वसंबंधेन तस्यासत्वात्। नत्विति। तथा च द्रव्यं सत्वादित्यादावतिव्याप्तिरिति भावः। ननूक्तदृष्टान्तस्थले

प्रतीतिर्हि द्रव्यत्वे गुणेन पृथिवीत्वसामानाधिकरण्यमिति प्रतीतिवत्सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यावच्छेदकत्वस्य परंपरासंबन्धेन सामानाधिकरण्य-
स्य वा। अभावं गुणेऽवगाहते। न तु सत्तायामेव द्रव्यवृत्तित्वाभावं सत्ता न द्रव्यवृत्तित्वाभाववती द्रव्यवृत्तित्वाभावेन। सत्ता वृत्तिरित्यादिसर्वजनप्रसिद्धप्रती-
तिबाधितत्वात्। बाधकाभावात्तु संयोगतदभावयोरवच्छेदकभेदेनैकत्र प्रतीत्या तदुभयोरेकत्र सिद्धिः। अतीन्द्रियसाध्यकेऽतीन्द्रियेऽव्यभिचारिण्यतिप्रसं-
गाच्च। तत्र सामानाधिकरण्याभावस्य प्रत्यक्षत्वासंभवेनासिद्धेः। { बाधकसत्वादवच्छेदकत्वाभावोऽस्तु प्रतीतेर्विषयः प्रकृते तु साक्षात्सामानाधिकरण्याभावविषयक-
त्वेन किंचिद्बाधकमस्तीत्यतो बाधकमाह। सत्तानेति। तथा च सत्तायां द्रव्यवृत्तित्वाभावसत्वे द्रव्यवृत्तित्वाभाववद्भिन्नत्वधीस्तत्र न स्यादिति भावः ननु द्रव्यवृत्तित्वाभावोऽव्याप्य-
वृत्तिरेवेति तद्भेदोऽप्यव्याप्यवृत्तिर्वाच्यः तथा च द्रव्यगुणात्मकविभिन्नावच्छेदेन तयोः सत्तायां समवेशात् कुतो विरोध इत्यत आह। द्रव्यवृत्तित्वाभाव इति नन्वेवं मूलेन
कपिसंयोगीति प्रतीत्या वृक्षादौ कपिसंयोगाभावोऽपि न सिद्ध्येत् तत्रापि वृक्षनिष्ठसंयोगावच्छेदकत्वाभावस्य मूलेऽवगाहनसंभवादत आह। बाधकाभावादिति। कपिसंयोगा-
भावो न वृक्षवृत्तिरित्यादिप्रत्ययस्यासंभवादिति भावः। ननु द्रव्ये वृत्तित्वाभावो न सत्तावृत्तिरिति प्रतीतिरेवासिद्धा द्रव्यवृत्तित्वाभावो गुणावच्छेदेन सत्तावृत्तिरिति प्रत्ययात्।
एकशेषस्य कर्तुमशक्यत्वादतो दोषान्तरमाह। अतीन्द्रियेति। मनस्त्ववदणुत्वादित्यादावित्यर्थः। तत्र अतीन्द्रियसाध्यके असद्धेतौ ॥ ॥ ॥ ॥

ननुप्रत्यक्षासंभवेनप्यणुत्वंमनस्त्वसामानाधिकरण्याभाववन्मनस्त्वाभाववद्वृत्तित्वात् पृथिवीत्ववदित्यनुमानेनैवतत्रसामानाधिकरण्याभावःसेत्स्यतीत्यतआह।नचेति।
नद्वृत्तीतिसाध्यवद्वृत्तिभिन्नत्वस्येत्यर्थः। तथाचोक्तानुमानेमनस्त्ववत् वृत्तिभिन्नत्वमुपाधिःतस्यचसाध्यव्यापकत्वंघटत्वादौसाधनाव्यापकत्वंद्रव्यत्वादौग्राह्यंभेद
स्याव्याप्यवृत्तित्वेतुसाध्यवद्वृत्तितत्तद्व्यक्तित्वावच्छिन्नभेदकूटउपाधिर्बोध्यः ननूक्तोपाध्यप्रतिसंधानदशायामुक्तानुमानादेवसाध्यवद्वृत्तित्वाभावसिद्धिस्तत्रभ
विष्यति अन्यथाव्याप्त्यंतरस्यापितत्रातिप्रसङ्गादित्यतआह॥ किंचिदमित्यादि॥ तथाचकालोगोमान्गोत्वादित्यादौकालिकसम्बन्धेनहेतावव्याप्तिः। कालिक
सम्बन्धेनहेतुमतिमहाकालेतेनसम्बन्धेनकालवृत्तित्वाभावस्यकुत्राप्यसत्वात् नचकालावच्छेदेनगगनादावेवसाध्यवद्वृत्तित्वाभावस्यप्रसिद्धिः कालस्यगगना
द्यनधिकरणत्वेनतन्निष्ठवृत्तित्वाभावेकालावच्छेद्यत्वासंभवात् कालिकसम्बन्धेनगगनादेर्वृत्तिमत्वस्वीकाराच्च यद्यपिगोत्वाद्यधिकरणतत्तत्क्षणावच्छेदेनका
लवृत्तित्वाभावस्यतत्तत्क्षणासमानकालीनेतत्तत्क्षणगोचरज्ञानेप्रसिद्धिः तत्तत्क्षणस्यापिविषयतयास्वविषयकज्ञानाधिकरणतयातन्निष्ठतादृशवृत्तित्वाभाववत्ता

नचतदभाववद्वृत्तित्वेनतत्रतदनुमेयं। नद्वृत्तिभिन्नत्वस्योपाधित्वात्। किंचइदमिदानीमितिप्रतीतिनियामकविशेषण
ताविशेषेणहेतुतायांसद्धेतावव्याप्तिः।तेनसंबन्धेनाधिकरणेकालेतेनसंबन्धेनसाध्यवद्वृत्तित्वस्यविरहिणोऽप्रसिद्धेः॥ ७ ॥

यामवच्छेदकत्वसंभवात्। तथापि महाकालएवकालिकसम्बन्धेनाधिकरणंउपाधीनांतुतत्तद्वृत्तितायामवच्छेदकत्वमात्रमितिप्राचीनसिद्धांतमनुरुध्येत् महाकालनि
रूपिविशेषणतयावाहेतावव्याप्तिर्द्रष्टव्याइदमिदानीमित्याकारकप्रतीतिनियामकविशेषतायायोविशेषस्तेनहेतुतायामितिव्याख्यातादृशविशेषणतायाःप्राप्तेःसा
मान्यतएवविभिन्नकालीनयोर्नाधाराधेयभावद्रूतिमतेनानुपपत्तिगन्धोपिस्वसमानकालीनस्यविषयतयाप्यनधिकरणत्वेनतदवच्छेदेनज्ञानेसाध्यवद्वृत्तित्वाभाप्रसि
ध्यसंभवादितिध्येयं।अत्रहेतुतावच्छेदकसंबन्धेनस्वाधिकरणेस्वनिरूपितहेतुतावच्छेदकसंबंधेनसाध्यवद्वृत्तित्वाभावस्यविवक्षायांनकोपिदोषःसाधनगोत्वाधिकरण
महाकालावच्छेदेनगोत्वनिरूपितकालिकसंबंधेनसाध्यवद्वृत्तित्वाभावस्यघटादावेवप्रसिद्धत्वात् साध्यसामानाधिकरण्यत्वपद्धर्मावच्छिन्नाधिकरणावच्छेद्यहेतुवृत्तिका
त्यन्ताभावप्रतियोगितानवच्छेदकतद्धर्मवत्त्वंवाविवक्षितम्। इत्थंचवाच्यंप्रमेयादित्यादौप्रमेयव्यक्तीनांभेदेपिनाव्याप्तेर्भेदद्वयस्मद्गुरुचरणाः ॥ ॥ ॥

केचित्तुस्वनिष्ठंयत्साध्यवद्वृत्तित्वंहेत्वधिकरणावच्छेद्यतद्भावाधिकरणभिन्नत्वमित्यर्थः। तादृशाभावाधिकरणत्वंसद्धेतुस्थलेस्वभिन्नव्यक्तावेवप्रसिद्धमतो नाव्याप्तिरित्याहुः साध्यवद्वृत्तित्वाभावाधिकरणत्वसामान्येयन्निष्ठत्वयदधिकरणावच्छेद्यत्वोभयाभावस्तत्त्वंव्याप्तिः पर्वतीरूपनिष्ठंयत्पर्वतावच्छेद्यंवन्हिमत्संयुक्तत्वाभावाधिकरणत्वंनतद्धूमनिष्ठं यच्चधूमनिष्ठंनतद्धूमाधिकरणावच्छेद्यमधिकरणभेदेनतस्यनानात्वात् अन्यथापर्वतेतदीयरूपेनवन्हिमत्संयुक्तत्वमितिवत्पर्वतेधूमेनवन्हिमत्संयुक्तत्वमित्योदिप्रतीत्यापत्तेः अतोवन्हिमान्धूमादित्यादौनाव्याप्तिः व्याप्यवृत्तेरवच्छेदकत्वास्वीकारेतुतादृशाभावाधिकरणत्वसामान्येयदधिकरणावच्छेद्यत्वसामान्याभावस्तत्त्वमित्येववाच्यमित्यादिकंपुनरुदक्षरत्वादुपेक्षितंवाच्यत्वादिसाध्यकेतादात्म्येनहेतावव्याप्ते श्ववाच्यत्ववत्तादात्म्याभावाप्रसिद्धेः एतेनसत्तायांकर्मणिनद्रव्यत्वसामानाधिकरण्यमितिप्रतीतौकर्मणद्दवकसत्वयोः समवायस्याप्यवच्छेदकत्वंभासते अन्यथा इदानींसत्तायांनद्रव्यत्वसामानाधिकरण्यमित्यादिप्रतिपत्तेः एतत्कालस्यकर्मानतिरेकात् एवंचयद्धेतुव्यक्त्यधिकरणीयहेतुतावच्छेदकसंबन्धेसाध्यवद्वृत्तित्वा भावावच्छेदकत्वंनास्तितत्त्वमित्यर्थः कालोगोमान्गोत्वादित्यादौकालवृत्तित्वाभावावच्छेदकत्वस्यद्रव्यत्वादिनिष्ठआत्मसमवेतत्वादौप्रसिद्धस्यगोत्वाधिकरणीयकालिकसम्बन्धेविरहान्नाव्याप्तिरित्यपिनिरस्तमितिसंक्षेपः।

॥ इतिसिद्धव्याघ्रलक्षणद्वयपूरणं॥ सम्वत् १९३०॥

॥वाराणसीप्रसादस्यनियोगेनतुयत्नतः॥काशीसंस्कृतमुद्रायामङ्कितोयंशिलाक्षरैः॥१॥ श्रीकाशीजीमेज्ञानवापीकेपूर्वफाटकपरश्रीविश्वनाथजीकेपासश्री५युतमहाराजशिवलालदुबेजीकेमकानमेयहपुस्तकमिलेगाअथवाकचौरीगलीमेभाईप्रतापसिंहजीकेदुकानपरमिलेगा॥

॥मितिपौषशुक्लद्वादशी१२भौमवासरे॥

अथसिंहव्याघ्रसहिताजागदीशीपंचलक्षणीप्रारम्यते ॥

पं.जा. श्रीगणेशाय नमः ॥ समारब्धेति ॥ समारब्धं यदनुमानप्रामाण्यपरीक्षणं तत्कारणीभूतं यद्व्याप्तिग्रहोपायप्रतिपादनं तन्निदानं व्याप्तिस्वरूपनिरूपण
१ मित्यर्थः । तथा च प्रामाण्यव्यवस्थापनोपोद्घातसंगत्या व्याप्तिस्वरूपनिरूपणमिति भावः । अव्याप्यवृत्तीति । कपिसंयोगी एतद्वृक्षत्वादित्यादावव्या
प्तिरित्यर्थः । इदं च येन रूपेण येन संबंधेन च साध्यत्वं तद्रूपावच्छिन्नप्रतियोगिताकसाध्याभावस्य प्रवेशमादाय । अन्यथाऽव्याप्यवृत्तिसाध्यकस्थलेपि
विशिष्टाभावादिकमादाय दोषो बोध्यः । अव्याप्यवृत्तिसाध्यकेप्याकाशादिहेतावव्याप्त्यभावादाह ॥ सद्धेतावपीति ॥ वृत्तिमद्धेतावित्यर्थः ॥ ननु सा-
ध्यवद्भिन्नो यः साध्याभाववानित्यर्थे साध्याभाववत्पदवैयर्थ्यं साध्यवद्भिन्नावृत्तित्वस्यैव सम्यक्त्वात् । न चावृत्तित्वेन समं साध्यवद्भिन्नस्यान्वया

समारब्धानुमानप्रामाण्यपरीक्षाकारणीभूतव्याप्तिग्रहोपायप्रतिपादननिदानं व्याप्तिस्वरूपनिरूपणमारभते नन्वि
त्यादिना साध्याभाववदवृत्तित्वस्याव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिमाशंक्याह साध्यवद्भिन्नेति । साध्यव-
द्भिन्ने यः साध्याभावस्तद्वदवृत्तित्वमित्यर्थः ।

विवक्षणात्साध्याभाववत्तासममेवतादात्म्येनान्वयविवक्षणान्न वैयर्थ्यमिति
वाच्यं तथा सति । साध्यवद्भिन्नात्मको यो मत्वर्थः । संबंधी तद्वृत्तित्वस्यैव सम्यक्त्वेन साध्याभावपदव्यर्थताध्रौव्यात् अतः सप्तमीसमासं सम
र्थ्य व्याचष्टे ॥ साध्यवद्भिन्न इति ॥ तथा च साध्यवद्भिन्नस्यावृत्तावनन्वयाद्यथासन्निवेशेन वैयर्थ्यम् । साध्याभावे साध्यवद्भिन्नवृत्तित्वविशे राम
षणं त्वव्याप्यवृत्तिसाध्यकसंग्रहार्थमेवेत्याशयः साध्यवद्भिन्नवृत्तिद्रव्यत्वादिमति धूमादेः सत्त्वादव्याप्तिरसम्भवो वा स्यात् अतः साध्याभा- १

वेति। नचकपिसंयोगी एतद्वृक्षत्वादित्यादेः संग्रहार्थमधिकरणभेदेनाभावभेदमाहायैवलक्षणमिदं कार्य्यं तथाच साध्यवद्भिन्ने यो भावस्तद्वद्वृत्तित्वमित्यस्यैव सम्यक्त्वात् साध्यपदस्यार्थमिति वाच्यं प्रतियोगिनासंसर्गेण साध्यीयत्वेनैव साध्याभावस्य प्रवेशः नत्वभावत्वेनापीति न वैयर्थ्यशंकानवकाशात्। वस्तुतस्तु स्वप्रतियोगितावच्छेदकसंसर्गेण साध्यवद्भिन्ने वर्तते यः साध्यतावच्छेदकसंबंधेन साध्यीयोऽभावस्तद्वद्वृत्तित्वमर्थः। तथाच साध्यतावच्छेदकसंबंधेन साध्यीयत्वार्थकस्य साध्यपदस्यानुक्तौ स्वप्रतियोगितावच्छेदकीभूतसमवायादिसंसर्गेणावच्छिन्नाद्वह्न्यादिमतोऽन्यस्मिन्पर्वतादौ वर्तते यः समवायसंबंधावच्छिन्नवह्न्यभावस्तद्वन्निधूमादेः सत्त्वादव्याप्तिः स्यादतस्तद्ग्रहणमितिनव्याःके तुव्याप्यवृत्तित्वाऽव्याप्यवृत्तित्वादिरूपविरुद्धधर्माध्यासात्संयोगाद्यभावस्यैव द्रव्यगुणाधिकरणभेदेन भेदो ननु गगनाद्यभावस्यापि मान

कर्मादौ संयोगाद्यभावस्य भिन्नत्वे मानाभावादाह साध्यवदिति हेतोः साध्यवत्स्वभिन्नदृष्टान्तवृत्तित्वेना-
व्याप्तेराह सकलेति

भावात्। तथाच साध्यवद्भिन्नगगनाद्यभाववन्निधूमादेः सत्त्वादव्याप्तिरतः साध्यपदमित्याहुः। नन्वेवं गुणे गगनाद्यभावे गुणत्वादिसामानाधिकरण्यं नतु द्रव्ये गगनाद्यभावेन तथात्वमित्यादिप्रतीत्या गुणत्वसामानाधिकरण्यतदभावयोर्विरुद्धधर्मयोः संभवादिति दिक्। नच घटत्वघटाकाशसंयोगान्यतरत्वावच्छिन्नाभाववान् गगनत्वादित्यत्राव्याप्तिः साध्यवद्भिन्ने यद्वर्तमानस्य गगनादिसंयोगात्मकस्य साध्याभावस्याधिकरणे गगनत्वहेतोः सत्त्वादिति वाच्यम्। अभावाभावस्यातिरिक्ततामते एवं तल्लक्षणकरणादिति भावः॥

भिन्नत्व इति। द्रव्यनिष्ठसंयोगाभावतो भिन्नत्वे सर्वैः मानाभावादिति। तथाचात्राव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिरिति भावः॥ हेतोरिति॥

नचसाध्यवत्प्रतियोगिकान्योन्याभावस्यकेवलान्वयित्वादसंभवएववक्तुमुचितोनाव्याप्तिरितिवाच्यं। वह्निमान्गगनादित्यत्रगगनादि
हेतौलक्षणासंभवात्। तस्यापिसद्धेतुतयास्वयंवक्ष्यमाणत्वादितिभावः साध्यपदस्यसिद्धिकर्म्मतत्तद्व्यक्तिपरतयातत्तद्व्यक्त्यवच्छिन्नान्यो
न्याभावासामानाधिकरण्यरूपपर्यवसितार्थस्यद्रव्यंपृथिवीत्वादित्यादावेवलक्षणसंभवाद्गंधवान्पृथिवीत्वादित्यादावव्याप्तिःकथनमित्य
पिवदंति ननुसकलस्यसाध्यस्यसाध्यप्रतियोगिकाभावस्याधिकरणाप्रसिध्याव्यभिचारिण्यतिव्याप्तिवारणार्थंयदिसाध्याभावस्यविशेषणंसा
कल्यंतदा वह्निमान्धूमादित्यादिसद्धेतावव्याप्तिः तत्रापितत्तद्विपक्षाद्वृत्तित्वावच्छिन्नाभावरूपस्यतत्तत्पक्षवृत्तित्वावच्छिन्नाभावरूपस्य
वासाध्यप्रतियोगिकाभावत्वोभयस्याधिकरणाप्रसिद्धेरतआह साकल्यंसाध्याभाववतीतितथाचसाकल्यंतसाध्याभावविशेषणमतोनाऽप्रसि

साकल्यंसाध्याभाववतिसाध्येचबोध्यं

द्धिरितिभावः नन्वेवमपिसाध्याभाववन्निखिलांतर्गगनेमहानसादौवर्तमानस्याभावस्यप्रतियोगित्वंधूमादौनास्तीत्यव्याप्तिरतदवस्थ्यमतआह
साध्येचेति॥ तथाचसपक्षोमहानसादिः नसकलसाध्यस्याभाववानित्यदोषः पांचसुव्यभिचारिण्यतिव्याप्तिवारणार्थंसाध्याभाववत्त्वयाव
त्वविशेषणेदत्तेएवसाध्येयावत्त्वमव्याप्तिवारकतयासार्थकंभवतीत्यतः साध्याभाववत्येवसाकल्यंप्रांक्योजयतिसाकल्यमित्यादिनेत्यवतार
यंति तन्मंदं साध्याभाववतिसाकल्यानुक्तावप्यतिव्याप्तिवारकतयैवसाध्येसाकल्यविशेषणस्यप्रथमतःसार्थक्यसंभवात् अन्यथागगना
द्वृत्तिधर्मवान्द्रव्यत्वादित्यादौपटत्वादिलक्षणतत्तत्साध्यव्यक्त्यभाववद्गुणादिनिष्ठाभावप्रतियोगित्वद्रव्यत्वादावतिप्रसंगादितिध्येयं ननु
साध्यवत्त्वस्यापिद्वित्वाद्यवच्छिन्नप्रतियोगिताकस्यसकलसाध्यप्रतियोगिताकाभावस्यसत्त्वादसंभवः॥ ७ ॥

किंच सकलपदोत्तरसाध्यनाम्ना सकलसाध्यप्रतियोगिताकाभाववत्तोऽनुपस्थापनात्तेन समं सकलपदस्य कर्मधारयोऽप्यनुपपन्न इत्यत आह सा-
ध्याभावो वेति। तथा च साध्याभाववत्त्वेव साकल्यं देयं न तु साध्येऽपीति भावः। साध्याभाववत्तिसाकल्यप्रयोजनमाह। तेनेति। विपक्षैकदेशः क-
श्चिद्विपक्षः साध्यनिष्ठसाकल्यस्य साध्यतावच्छेदकावच्छिन्नाभावस्य च विवक्षायाः फलमाह। नवेति। एकव्यक्तिसाध्यके सकलसाध्योक्ता-
वप्यव्याप्तिरग्रे स्थास्यतीत्याशयेन नानेत्युक्तम्॥ अव्याप्यवृत्तीति। कपिसंयोग्येतत्त्वादित्यादावित्यर्थः। यद्यप्यग्रे हेत्वभावस्यापि प्रतियोगिवै-
यधिकरण्यावच्छिन्नस्यैव निवेशः करणीय इत्यव्याप्यवृत्तिहेतावव्याप्तिः संभवति। तथापि यथाश्रुतमूलस्य तत्राव्याप्तिरित्यावेदयितुम्।

साध्याभावो वा साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकोऽग्राह्यः। तेन विपक्षैकदेशनिष्ठाभावप्रतियोगिनि व्यभिचा-
रिणि नातिव्याप्तिः। न वा नानाव्यक्तिसाध्यकसद्धेतावव्याप्तिः॥ अव्याप्यवृत्तिसाध्यकव्याप्यवृत्तिसद्धेतावव्याप्तेर्व्य-
भिचारिणि चाव्याप्यवृत्तावतिव्याप्तेर्वारणायाभावद्वये प्रतियोगिवैयधिकरण्यं बोध्यं॥ प्यवृत्तिहेतूक्तिः। व्यभिचारि-

णीति। एतद्वृक्षत्ववान्कपिसंयोगादित्यादावित्यर्थः। अभावद्वय इति। साध्याभावे हेत्वभावे चेत्यर्थः। अत्र च साध्याभावे प्रतियोगिवैयधिकरण्यं
साध्यतावच्छेदकसंबंधेन प्रतियोगिनो यदनधिकरणं तद्वृत्तित्वं तेन धूमाद्यभाववतोऽप्ययःपिण्डादेः कालादिसंबंधेन धूमादिमत्त्वेऽपि नातिव्याप्तिः। हे-
त्वभावे प्रतियोगिवैयधिकरण्यं तु प्रतियोगितावच्छेदकसंबंधेन प्रतियोग्यनधिकरणत्वघटितं वाच्यं तेनायमात्मा ज्ञानादित्यादौ साध्याभावव-
तो घटादेर्विषयतया हेत्वभावप्रतियोगिमत्त्वेऽपि नाव्याप्तिः॥ ७ ॥ ७ ॥ ७ ॥

पं.जा. हेत्वभावोपीति। अपिनासाध्याभावसमुच्चयस्तेनविशिष्टसत्तावानुज्ञानेइत्यादौनातिव्याप्तिः। यद्यपिसाध्याभावोपीत्येववक्तुमानुरोधादकुमु-
२ चितं अपिशब्दादेवहेत्वभावस्यलाभसंभवात्। तथापितत्प्रतियोगित्वंचेत्यग्रेतनतत्पदेनानिर्दिष्टहेत्वाभावपरामर्शासंभवाद्धेत्वाभावप्रतियोगि
त्वंचेत्यभिधानेचग्रंथगौरवंस्यादितीत्थमभिधानम्। प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगीतिप्रतियोगिपदंप्रतियोगितावच्छेदकताघटक
संबंधेनावच्छेदकस्यवैशिष्ट्यलाभायतेनहृदादौकालिकादिसंबंधेनधूमत्वाद्यवच्छिन्नस्यकाष्ठादेःसंयोगसंबंधेनसत्वेपिनाव्याप्तिःतत्प्र
तियोगित्वंहेत्वभावप्रतियोगित्वं हेतुतावच्छेदकरूपेणेति हेतुतावच्छेदकसंबंधेनेत्यपिबोध्यम् तेनात्मभिन्नद्रव्यत्वादित्यादौसाध्याभाव
वत्यात्मनिवर्तमानस्यप्रतियोगितावच्छेदकसंबंधेनप्रतियोगिव्यधिकरणस्यकालिकादिसंबंधावच्छिन्नद्रव्यत्वत्वावच्छिन्नाभावस्यप्रतियो

हेत्वभावोपिप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणःतत्प्रतियोगित्वंचहेतुतावच्छेदकरूपेणबोध्यं ते
नद्रव्यत्वादौसाध्येविशिष्टसत्तादौनाव्याप्तिः गित्वेपिद्रव्यत्वस्यनातिव्याप्तिः नचहेतुतावच्छेदकसंबन्धेनप्रतियोगिवैयधिकरण्यो-
क्तौवानिव्याप्तिवारणसंभवात्। हेतुतावच्छेदकसंबंधेनप्रतियोगित्वविवक्षायामर्थेतिवाच्यं तथासतिनिर्धूमत्वव्याप्यवान् निर्वह्नित्वादित्यादौ-
निर्वह्नित्वभेदमादायैवलक्षणसमन्वयेनिर्धूमत्वव्याप्येत्याद्युत्तरग्रंथेवक्ष्यमाणव्याप्यत्वघटकतापत्तेरितिध्येयं हेत्वभावेपिप्रतियोगितावच्छेद-
कावच्छिन्नप्रतियोगिवैयधिकरण्यविवक्षायाःफलमाहतेनद्रव्यत्वादाविति। अन्यथासाध्याभाववतिगुणादौविशिष्टसत्ताभावस्यसत्तारूपप्रतियो राम
गिसमानाधिकरणत्वादव्याप्तिरेवस्यादितिभावः अत्रद्रव्यत्वस्यसाध्यतायांसकलसाध्याप्रसिद्ध्याऽव्याप्तेरुक्तविवक्षयाप्यप्रतीकाराद्धादिपदंतेनग २

णवत्त्वादिसाध्यस्योपसंग्रहः द्रव्येतरासमवेतमात्रं वा प्रकृते द्रव्यत्वमिति ध्येयं॥ हेतुतावच्छेदकरूपेणाहेत्वभावप्रतियोगित्वविवक्षायाः फलमाह
नवेति। सत्त्वादाविति द्रव्यत्वादौ साध्ये इत्यनुवर्तते। यत्रैकव्यक्तिकमिति। तथा च द्रव्यं पृथिवीत्वादित्यादावव्याप्तिः तत्र सकलसाध्याप्रसिद्धेरित्य-
र्थः नन्वितोप्यसरसात्साध्यसामान्याभावस्यैव निवेशितत्वात्साध्ये साकल्यं न देयमेवेत्यत आह। विपक्षो वेति। एकव्यक्तिकमित्यनुषज्यते।
तथा च यत्रैकव्यक्तिरेव साध्याभाववती तत्र गगनादिनिष्ठधर्मवान् गगनान्यत्वादित्यादावव्याप्तिः साध्याभाववतः साकल्याप्रसिद्धेरित्यर्थः। ननु सा
ध्यादिभेदेन व्याप्तिभेदाद्यत्रैक एव विपक्षस्तत्र तल्लक्षणे साध्याभाववति साकल्यविशेषणं न देयमशेषत्वरूपं वा साकल्यं निवेश्यमतो दोषान्तरमा

न वा विशिष्टसत्तात्वादिना नादृश्याभावप्रतियोगिनि सत्तादावतिप्रसंगः यत्रैकव्यक्तिकं साध्यं विपक्षो वा तत्र निर्धू-
मत्वादिव्याप्यवत्त्वेन साध्ये निर्वह्नित्वादौ चाव्याप्तिः तत्र हेत्वभावस्य वह्न्यादेः प्रत्येकं यावद्विपक्षावृत्तित्वादत-
आह साध्यवदिति।

ह। निर्धूमत्वव्याप्य इति। निर्धूमत्वस्य साध्यत्वे यत्रैकव्यक्तिकमित्यनेनैव गतार्थता स्यादतो व्याप्यपर्यन्तं निर्धूम-
त्वव्याप्यस्यापि स्नेहादेः स्नेहत्वादिना साध्यत्वे वह्न्यभावस्य व्यभिचारित्वादसंग्रहीतदोषायेत्यत उक्तम्। तत्त्वेन साध्ये इति। निर्धूम-
त्वव्याप्यत्वेन साध्य इत्यर्थः। प्रत्येकमिति। तथा च हेत्वभावस्य महानसीयवह्नेः साध्याभाववत्सकलान्तर्गतपर्वतादावृत्तित्वादव्याप्तिरिति
भावः अत्र निरुक्तप्रतियोगिवैयधिकरण्यावच्छिन्नसाध्याभावव्यापकतावच्छेदकं निरुक्तवैयधिकरण्यावच्छिन्नयद्धर्मावच्छिन्नाभावत्वं
तद्धर्मवत्त्वं व्याप्तिरित्युक्तौ तु नैष दोष इति ध्येयं॥ ❀ ॥ ❀ ॥ ❀ ॥ ❀ ॥

ननु साध्यत्वस्य प्रतियोगिकान्यतरस्य धूमादिमति सत्त्वादव्याप्तिरत आह। अन्त्ये इति। तथा च साध्यत्वस्य दैन निरूढलक्षणयोपस्थापितस्य साध्यताव
च्छेदकविशिष्टसाध्यत्वावच्छिन्नप्रतियोगिताकस्यान्यपदार्थैकदेशेऽन्यत्वे नातादात्म्येनान्वयात्साध्यवति च विशिष्टसाध्यत्वावच्छिन्नप्र
तियोगिताकभेदासत्त्वान्नाव्याप्तिः गुरुधर्मस्यावच्छेदकत्वोपगमाच्च द्रव्यं पृथिवीत्वादित्यादौ द्रव्यत्वत्वविशिष्टद्रव्यत्वावच्छिन्नभेदाप्र-
सिद्ध्या नाव्याप्तिरिति भावः। यद्धर्मविशिष्टबोधकपदसमभिव्याहृतेनान्यादिपदेनोपस्थापितेऽन्यत्वादौ तद्धर्मावच्छिन्नप्रतियोगिताकत्व
प्रकारेणैव तादात्म्येनान्वयो ननु तद्धर्माश्रयप्रतियोगिताकत्वेनेत्यत्र व्युत्पत्तौ प्रमाणमाह॥ नहीति॥ तथा च तादृशव्युत्पत्त्यस्वीकारे नील
घटे घटप्रतियोगिकभेदसत्त्वान्नीलो घटो घटान्य इत्यपि व्यवहारः स्यादिति भावः अत्र च द्रव्यं घटान्यदित्याद्यप्रयोगान् यन्निष्ठप्रतियोगि

अत्रान्योन्याभावस्य साध्यत्वावच्छिन्नप्रतियोगिताकत्वं व्युत्पत्तिबललभ्यं न हि भवति नीलो घटो घटान्य इति

ताकत्वेनान्यादिपदेन भेदो बोध्यते तद्वृत्तिधर्मस्यैवानुयोगितावच्छेदकत्वात् न तु एवं घटो घटान्य इत्यवारणसंभवात् नीलघटत्वस्यानुयो
गितावच्छेदकत्वपर्यवसानानुधावनमिति मंतव्यं नीलो घटो घटान्य इत्येव सम्यक् पाठः तथैव प्रकृतोपयोगित्वसंगतेः घटादन्य इति पाठस्तु सा
ध्यवदन्ये सत्र पंचमीसमासे लुप्तविभक्तिस्मारितप्रतियोगित्वे प्रकृत्यर्थतावच्छेदकावच्छिन्नत्वस्य संसर्गमर्यादया भानमाहत्य कथंचित्सं
गमनीयः घटः पटो नेत्यादौ तु पटपदं मुख्यार्थपरमेव ननु प्रकृते इव पटत्वावच्छिन्नप्रतियोगिताकपरं निपातातिरिक्तस्थले एव नामार्थयोरभे
दान्वयव्युत्पत्त्या नञोपस्थापितेऽभेदे पटत्वावच्छिन्नप्रतियोगिताकत्वसंसर्गेणैव पटस्यान्वयसंभवात्। पटत्वावच्छिन्नप्रतियो

गिताकत्वं तु पटत्वमवच्छिन्नत्वं प्रतियोगित्वं चेति त्रितयमेव विशेष्यविशेषणभावापन्नं संसर्गः ननु वस्तुगत्या पटत्वावच्छिन्नं यत्प्रतियोगित्वं तन्मात्रं पटो नेत्यत्र पटत्वावच्छिन्नत्वस्याप्यनुभवसिद्धत्वात् अन्यथा प्रतियोगिताव्यक्तिभिरेव तद्विशिष्टबुद्ध्युपपत्तौ पटत्वादेस्तदवच्छेदकत्वमेव न स्यात् मानाभावात् अत एव केवलान्वयिग्रन्थे वह्निर्नास्तीत्यत्र वह्नित्वं तदवच्छिन्नत्वं प्रतियोगित्वं च संसर्गमर्यादया भासत इति स्वयमप्युक्तं इत्थमेव च प्रमेयं नास्ति कंबुग्रीवादिमान्नास्तीत्यादिशाब्दबोधानां संसर्गकोटावेव प्रतियोगितायां प्रमेयत्वावच्छिन्नत्वावगाहितया भ्रमत्वं संसर्गप्रकारसाधारणविशेष्यविशेषणभावस्यैव भ्रमत्वघटकत्वात् अन्यथा स्वरूपसंबंधेन प्रमेयत्वाद्यवच्छिन्नप्रतियोगित्वस्यालीकतयाऽखंडनत्वसंबंधेन प्रमेयस्याभावे धर्मिण्यन्वयासंभवेन भ्रमत्वानुपपत्तेः सद्गुरोगेणाप्यसतः संसर्गमर्यादया भानस्यानंगीकारात् क्रमेण पटत्वावच्छिन्नप्रतियोगित्वसंबंधेन चाभावे प्रमेयस्य सत्वेन तादृशसंबंधेन भ्रमत्वस्य वक्तुमशक्यत्वात् पटत्वादेरन्वयिनानवच्छेदकतया तदवच्छिन्नप्रतियोगित्वसंबंधेन प्रमेयत्वादिविशिष्टस्यान्वये निराकांक्षत्वाच्च । अन्यथा घटवत्यपि घटो नास्तीत्यादेः प्रमाणत्वापत्तेः तत्र हि घटत्वावच्छिन्नप्रतियोगित्वसंबंधेन घटविशिष्टस्य घटविशेष्याभावस्य तत्र सत्वात् एतेन सत्तासमवायिन्यपि गुणादौ विशिष्टसत्तात्वावच्छिन्नस्य समवायेनासत्वेन घटत्वावच्छिन्नप्रतियोगित्वसंबंधेन घटत्वावच्छिन्नवतोपि घटाद्यभावस्य ननु तादृशसंबंधेन प्रमेयत्वावच्छिन्नवत्वमतः प्रमेयं नास्तीत्यादौ घटत्वावच्छिन्नप्रतियोगित्वसंबंधेन प्रमेयत्वावच्छिन्नस्यैवाभावांशे भ्रमत्वमित्यपि प्रत्युक्तं घटत्वादेरन्वयिनानवच्छेदकतया तदवच्छिन्नप्रतियोगितासंबंधेन प्रमेयत्वविशिष्टस्यान्वये निराकांक्षतया तथा शाब्दस्यासंभवादिति ध्येयम् । नीलो घटो नास्तीत्यादौ तु नीलघटत्वस्यान्वयिनावच्छेदकत्वेन तादृशधर्मावच्छिन्नप्रतियोगित्वसंसर्गेण तु नीलत्वघटत्वादिप्रत्येकावच्छिन्नप्रतियोगित्वं नीलपटस्य पीतघटस्य वाधिकरणे तादृशप्रयोगापत्त्या प-

पं॰ जा॰ तेः नीलोत्पलमस्ति तस्य घटत्वमात्रस्यान्वयितावच्छेदकत्वे तु घटत्वावच्छिन्नप्रतियोगित्वमेव तथा संयोगेन घटो नास्तीत्यादौ तु तृतीयाविभक्तेर्नावच्छि-
५ न्नत्वमर्थः संसर्गीभूतप्रतियोगितायां तदन्वयासंभवात् किं त्ववच्छिन्नप्रतियोगिताकत्वं प्रतियोगित्वमात्रं वावच्छिन्नत्वसंसर्गेण संयोगादेः तत्रान्व-
यादेव विशिष्टलाभसंभवात् नचैवं संयोगेन घटाभावस्यैव समवायेन घटविशिष्टद्रव्यत्वाभावतया समवायेन कपाले घटो नास्तीति व्यवहारापत्तिः तृती-
यान्तसमभिव्याहारस्थले तद्रूपस्याप्यप्रतियोगित्वस्यैव संसर्गतयाभ्युपगन्तत्वात् समवायावच्छिन्नघटप्रतियोगिताकाभावस्य च कपाले विरहात् अ-
स्तु वा घटत्वावच्छिन्नस्यैव संयोगसंबंधावच्छिन्नत्वस्यापि प्रतियोगित्वांशे संसर्गमर्यादयैव भानं तृतीयान्तसमभिव्याहारस्य नियामकत्वाच्चनातिप्रसं-
गः घटानधिकरणं भूतलमित्यादौ तु लक्षणया अधिकरणपदमेव घटाधिकरणार्थकं घटपदं तात्पर्यग्राहकं अन्यथानधिकरणपदेनाधिकरणसामा-
न्यभिन्नत्वोक्तौ भूतलेन तस्य बाधः स्यात् नच घटवद्भिन्नस्यैवाधिकरणभेदस्तत्र नञा बोधनीयः समासान्तर्गतनञस्तूत्तरपदार्थमात्रान्वयित्वव्युत्पत्तेः
अन्यथा नीलघटो घट इत्यादौ नीलघटान्यस्य घटत्वं नीलाप्रमेयः पट इत्यादौ च नीलप्रमेयान्यस्य पटत्वं प्रतीयेत वस्तुतः स सम्बन्धिकपदस्थले व्यु-
त्पत्तिवैचित्र्यात्। प्रतियोगितानवच्छेदकं घटानधिकरणं भूतलमित्यादौ घटादावन्विनस्यैवाधिकरणादेर्भेदो भासते अन्यत्र त्विपदस्तु रूपानुपगमे
पि घटस्यानधिकरणं प्रतियोगितायां नावच्छेदकमित्यादिरीत्या त्विपदस्तु रूपेण विशिष्टलाभसंभवादिति तु परमार्थः पीतः शंखो नास्तीत्यादौ-
शाब्दबोधस्तु न शंखत्वावच्छिन्नतया प्रतियोगित्वमवगाहते तस्मात् तस्यान्वयितानवच्छेदकत्वात् शंखवत्तया निश्चिते धर्मिण्यपि तादृशः प्रयोगात्
परं तु पीतशंखत्वावच्छिन्नप्रतियोगिताकत्वेन संसर्गमर्यादया प्रतियोगित्वमवगाहते नञादिपदानां यद्धर्मविशिष्टवैशिष्ट्यावगाहित्वोपस्थाप्या- राम
भावधार्मिकान्वयबोधजनकत्वं तद्धर्मावच्छिन्नप्रतियोगिताकत्वेन प्रतियोगितासंसर्गकान्वयबोधजनकत्वव्युत्पत्तेः इयांस्तु विशेषः यद्घटो नास्तीत्यादि ५

ष्ठाद्वेसांसर्गिकीप्रतियोगित्वावगाहिनाप्रसिद्धेनघटत्वावच्छिन्नप्रतियोगिताकत्वेननिरूपितापीनःप्रसंशोनास्तीत्यादौतुपीतशंखत्वावच्छिन्नप्रतियो
गितात्वेनाप्रसिद्धेनैवेत्यादिकंबहुतरमूहनीयं॥ इतिजागदीशीपंचलक्षणीसंपूर्णा॥ ॥ ॥ ॥

श्रीगणेशायनमः॥ साध्यासामानाधिकरण्यपदस्यसाध्यवद्भिन्नवृत्तित्वार्थकत्वेसाध्यवैयधिकरण्येत्यादिउत्तरलक्षणेनपौनरुक्त्यापत्तिरतो-
व्याचष्टेसाध्यसमानाधिकरणंयस्येतितत्त्वमितिपरेणान्वयः वन्हिमात्रस्यैवव्यधिकरणत्वेनतद्धूमसमानाधिकरणत्वात् वन्हिमान्धूमादित्या
दावव्याप्तेराह। यदधिकरणेति। यदधिकरणमनधिकरणंयस्येतिव्युत्पत्त्यायस्याधिकरणंसाध्यानधिकरणंतत्त्वमित्यर्थः तेनतद्धूमाधिकरणं

नापीति। साध्यसमानाधिकरणंयस्ययदधिकरणानधिकरणंसाध्यंतत्त्वं। साध्यनिष्ठासामानाधिकरण्यप्रतियोगित्वम्।
साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमितियावत्। तदनधिकरणत्वमित्यर्थः। साध्यवद्भिन्नस्यसाध्यनिष्ठाधेय-
त्वानिरूपकत्वात्तद्धूमोनातिप्रसंगः॥ ननुवन्हिसामान्यानधिकरणमतोनाव्याप्तिरितिभावः ननुघटादिस्वरूपंयत्किंचिद्यत्किंचिदधिकर
णंसाध्याभूतधूमाद्यनधिकरणंतद्यत्किंचित्त्वानधिकरणत्वंवन्ह्यादेरप्यतोधूमवान्वन्हेरित्यादावतिव्याप्तिः। यदाद्यत्किंचिदधिकरणंसाध्यानधिकर-
णंतद्यत्किंचित्त्वानधिकरणत्वोक्तौतुमहागौरवमतआह। साध्यनिष्ठेति। साध्यनिष्ठाभावप्रतियोगित्वंसद्धेतोरप्यस्तीत्यतः सामानाधिकरण्याभा
वउक्तः नचसाध्यनिष्ठस्यसामानाधिकरण्याभावस्यप्रतियोगित्वंसामानाधिकरण्यएवतनुवन्ह्यादावित्यसद्धेतावतिव्याप्तिःसाध्यनिष्ठाभावप्रति
योगिवृत्तित्वनिरूपकाधिकरणवृत्तित्वस्यविवक्षितत्वात् वस्तुतःअसमानाधिकरण्यंसामानाधिकरण्यसंबंधेनाभावइतिपरमार्थः॥ ॥

नचैवंद्रव्यंविशिष्टसत्तादित्यादावव्याप्तिः सामानाधिकरण्याभावस्याव्याप्यवृत्तित्वेनसाध्यनिष्ठत्वात् एतदस्वरसेनैववाकल्यांतरानुसरणादि
त्यपरे नन्वेवमपिवन्हिमान्धूमादित्यादिविषमव्याप्तेहेतावव्याप्तिः महानसीयवन्हिनिष्ठस्यपर्वतवृत्तित्वाद्यभावस्यप्रतियोगीभूतंयदाधेयत्वं
तन्निरूपकेपर्वतादौधूमादेर्वर्तमानत्वात्साध्यसामान्यनिष्ठाभावप्रतियोग्याधेयतानिरूपकाधिकरणवृत्तित्वोक्तौचमहागौरवमतआह।सा
ध्यनिष्ठाधेयत्वेति।अत्राधेयत्वंसाध्यताघटकसंबंधेनग्राह्यं तेनरूपवान्महाकालत्वादित्यादौसंबंधसामान्येनरूपनिष्ठाधेयत्वानिरूपकेग
गनादौहेतोरवृत्तित्वेपिनातिव्याप्तिः सद्धेतौसाध्यवद्भिन्नवृत्तौ ननुसाध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमवश्यंहेतुताघटकसंबंधेन
वाच्यमन्यथावन्हिनिष्ठाधेयत्वानिरूपकेस्वावयवेसमवायादिनाधूमादेः सत्वादव्याप्त्यापत्तेः तथाचसत्तावान्द्रव्यत्वाद्धूमाद्वेत्यादावव्याप्तिःसा

साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वमितिनिष्कर्षस्तेनसत्तावान्द्र
व्यत्वादित्यादौनदोषः।साध्यवैयधिकरण्यं। ध्यनिष्ठाधेयत्वानिरूपकेजात्यादौसमवायेनसंयोगेनवावृत्त्यप्रसिद्धेः किंचद्रव्यंविशि
ष्टसत्तादित्यादावव्याप्तिः द्रव्यत्वनिष्ठाधेयत्वानिरूपकगुणादिवृत्तित्वस्यविशिष्टसत्तायांसत्वादित्यतआह।साध्यनिष्ठेति।धूमनिष्ठाधेयत्वा
निरूपकेजलादौवन्ह्याद्यधिकरणत्वाभावसत्वाद्व्यभिचारिण्यतिव्याप्तिरतोव्यापकेतिव्यापकत्वंचप्रतियोगिवैयधिकरण्याघटितमेवग्राह्यं।
तेनसंयोगेनवन्ह्यधिकरणत्वस्याव्याप्यवृत्तितयातदभावस्यतत्प्रायःपिंडवृत्तित्वेपिनातिव्याप्तिः वन्ह्यधिकरणत्वगगनोभयत्वावच्छिन्नाभा-
वस्यधूमनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकत्वादतिव्याप्तिस्तुसामान्यपदं तथाचहेतुतावच्छेदकसंबंधावच्छिन्नपदमावच्छिन्नाधि

करणत्वसामान्याभावत्वेनसाध्यनिष्ठाधेयतानिरूपकाधिकरणत्वव्यापकत्वंतद्धर्मवत्त्वमर्थः तेनवह्निनिष्ठाधेयतानिरूपकाधिकरणजलादौ
कालिकसंबन्धेनधूमाधिकरणतायाःसत्त्वेपिनाव्याप्तिः।नचावह्न्यधिकरणत्वाभावस्यापिप्रमेयत्वादिनाधूमनिष्ठाधेयतानिरूपकाधिकरण
त्वव्यापकत्वेप्यतिव्याप्तिः नचहेतुतावच्छेदकसंबंधेनयद्धर्मावच्छिन्नाभावत्वेनतादृशाधिकरणताव्यापकत्वस्यैवसमस्यन्तेऽधिकरणत्वा
भावपर्यन्तानुप्रवेशोव्यर्थइतिवाच्यम्।हेत्वनियामकसंबंधेनहेतुतायामव्याप्तिप्रसंगात् तादृशसंबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः अस्मा
कंतुतादृशसंबंधेनयद्धेतुसंबंधित्वंतस्यस्वरूपसंबंधावच्छिन्नाभावप्रतियोगित्वमादायलक्षणसंभवात् किंचाधिकरणत्वाप्रवेशेवह्न्यादेः
साध्यत्वेसंयोगादिसंबंधेनरूपादिहेतावतिव्याप्तिः संयोगेनरूपाद्यभावस्यकेवलान्वयितयावह्निनिष्ठाधेयतानिरूपकाधिकरणत्व-

साध्यवद्भिन्नाधिकरणत्वं चरमाधिकरणत्वांशस्यानतिप्रयोजनकतयातदपहायतद्द्वयमेकोक्त्याअनूद्यदूषयतितदुभ-
यमपीति।साध्येत्यादेःसाध्यंयदधिकरणानधिकरणंतत्त्वाभावः।साध्यस्ययदनधिकरणंतद्वृत्तित्वाभावश्चार्थः।

व्यापकत्वादितिभावः।साध्यवद्भिन्नेति।अत्रापिसाध्यवद्भिन्नत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वमितिनिष्कर्षोबोध्यः तेनस
त्तावान्द्रव्यत्वादित्यादौनाव्याप्तिः ननुप्रागुक्तस्यार्थस्यशब्दान्तरेणाभिधानमनुवादः सचात्रासंभवी साध्यंयदधिकरणानधिकरणंतत्त्वान
धिकरणत्वस्यसाध्यवद्भिन्नवृत्तित्वानधिकरणत्वस्यचप्रागुक्तस्यसाध्यानधिकरणानधिकरणत्वशब्देनाबोधनादतआह।चरमेति।तत्त्वाधिकर-
णत्वाभावेनतत्त्वाभावस्यप्रवेशाद्वैयर्थ्यमसंभवीत्यतउक्तं।अनतिप्रयोजनकतयेति।तथाचप्रकृतलक्षणवाक्यस्यसाध्यंयदधिकरणानधिक

सिं॰ जा॰ रणंतत्वाभावेसाध्यस्ययदनधिकरणंतद्वृत्तित्वाभावएववचनासर्यात् प्रागभिप्रेतार्थस्यशब्दांतरेणाभिधानमेवानुवादः सचात्रसंभवत्येवेतिभा
७ वः साध्यमित्यादि साध्यानधिकरणेत्यादौमध्यवर्तिनञोव्यत्यासेनचरमाधिकरणत्वांशेनसहान्वयादेवनञ्ज्ञाभइत्याशयः। केवलान्वयिनीति।
अव्याप्तिरितिपरेणान्वयः अव्याप्तेर्हेतुमाह। साध्यनिष्ठेति। नानाव्यक्तिसाध्यकेचेतिमूलोक्तधूमहेतुमभिप्रेत्यनेनशब्दवान्गगनत्वादित्यादौना-
नाव्यक्तिसाध्यकाव्याप्तिविरहेपिनक्षतिः न्यूनतांपरिहरति। क्वचिदिति। विशिष्टसत्तावान्जातेरित्यादावतिव्याप्तिरित्यर्थः विशिष्टधर्मावच्छिन्न

तत्रकेवलान्वयिनिसाध्यनिष्ठाधेयत्वानिरूपकाधिकरणाप्रसिद्धा नानाव्यक्तिसाध्यकेचएकसाध्यव्यक्तिनिष्ठाधेयत्वा
निरूपकाधिकरणत्वं। साधनाधिकरणव्यक्त्यन्तरस्येत्यव्याप्तिः। क्वचिद्व्यभिचारिण्यतिप्रसंगश्चादौ। द्वितीयेचसाध्य
वैयधिकरण्येयदिसाध्यत्वावच्छिन्नप्रतियोगिताकोभेदोविवक्षितस्तदाकेवलान्वयिनियदिचयत्किंचित्साध्यव्य
क्तिभेदस्तदानानाधिकरणसाध्यकेसर्वत्राव्याप्तिः। केचित्तुसाध्यसामानाधिकरण्यंहेतुनावच्छेदकसंबन्धेन। ॥

धिकरणत्वस्यैवतदवच्छिन्नाधेयत्वस्यानतिरिक्तत्वादितिभावः। यत्किंचिदिति। साध्यवत्तत्तद्व्यक्तित्वावच्छिन्नइत्यर्थः। नानाधिकरणसा
ध्यकेति। यत्रसाध्यतावच्छेदकावच्छिन्नाधिकरणंनानातत्रेत्यर्थः। तेनकस्याञ्चिदपिवह्निव्यक्तेर्नानाधिकरणवृत्तित्वविरहेपिनवह्निसाध्य राम
कधूमाद्यसंग्रहः। सर्वत्रकेवलान्वयिनितद्भिन्नेचसार्वभौममनुत्थापयति। केचित्त्विति। हेत्वधिकरणइतिसप्तम्यर्थोवच्छेदकत्वंतत्त्वसाध्य ७

वद्वृत्तित्वाभावेन्वितं । तेनैवेति । हेतुतावच्छेदकसंबन्धेनैवेत्यर्थस्तस्य च साध्यवद्वृत्तित्वेन सहान्वयः साध्यवत्त्वमपि येन संबंधेन येन रूपेण
साध्यतातत्संबंधेन तद्रूपावच्छिन्नवत्त्वं बोध्यम् । तेन समवायेन वह्नेः साध्यत्वे धूमे विशिष्टसत्त्वसाध्यके सत्त्वादौ नातिव्याप्तिः तदधिकरण
भिन्नत्वमिति । तदत्यन्ताभाववत्त्वोक्तौ द्रव्यसत्त्वादित्यादावव्याप्तिः गुणाद्यवच्छेदेन द्रव्यवृत्तित्वाभावस्यैव द्रव्यावच्छेदेन सत्तायामभाव-
सत्त्वात्तन्नो भिन्नत्वपर्यन्तानुसरणमेतदस्तु नाव्याप्यवृत्तिः तदव्याप्यवृत्तित्वे तु तादृशवृत्तित्वाभाववती यावती व्यक्तिस्तत्तद्भेदकूटवत्त्वं वक्तव्य-
मिति भावः हेतुतावच्छेदकसंबन्धेन हेत्वधिकरणइत्यस्य फलमाह । स्वावयवे संयोगेनेति । अवृत्तावपि तत्सत्त्वादित्यन्वयः । तथा च तादृशसंबन्धे
न हेत्वधिकरणत्वाप्रवेशे स्वावयवावच्छेदेन धूमस्य वह्निमत्संयुक्तत्वाभाववत्त्वाद्वह्निमान्धूमादित्यादावव्याप्तिः स्यात्पुनरसंभवः इदं वा

हेत्वधिकरणे तेनैव सम्बन्धेन साध्यवद्वृत्तित्वाभावस्तदधिकरणाभिन्नत्वमर्थस्तेन धूमस्य । स्वावयवे संयोगेन वह्नि

मति च समवायेनावृत्तावपि तत्सत्त्वात् । ज्ञेयत्वादित्यादिकेवलान्वयिनि लक्षणासंभवादिति भावः अत्र चोत्पत्तिकालावच्छिन्नेघ
टे पृथिवीत्वे रूपवद्वृत्तित्वं नेत्यादिप्रतीत्या घटाद्यवच्छेदेन पृथिवीत्वादौ रूपवद्वृत्तित्वाभावाभ्युपगमे हेत्वधिकरणनिष्ठमवच्छेदकत्वं निरवच्छि
न्नं ग्राह्यं तेन रूपवान्पृथिवीत्वादित्यादौ नाव्याप्तिः । तत्र घटनिष्ठावच्छेदकत्वस्योत्पत्तिकालेनावच्छेदादिति ध्येयं । तेनैवेत्यस्य फलमाह । वह्नि
मति च समवायेनेति । हेतुतावच्छेदकसंबंधेन साध्यवद्वृत्तित्वानुक्तौ सम्बन्धसामान्येन हेत्वधिकरणावच्छेदेन साध्यवद्वृत्तित्वसामान्याभावो न
निवेश्यः साधनाधिकरणाद्यवच्छेदेन तादृशाभावस्याप्रसिद्धेः । किंतु यत्किंचित्संबंधेन साध्यवद्वृत्तित्वाभावः प्रवेशनीयः तथा च हेत्वधिकर

सि·जा· णपर्वतनाद्यवच्छेदेनधूमादौवह्निमत्समवेतत्वाद्यभावसत्त्वादसंभवएवस्यात् यद्दिनेनैवसंबंधेनसाध्यवद्भिन्नत्वमवेयोनस्यादितिभावः।ननु
८ हेत्वधिकरणावच्छेद्यत्वविशिष्टस्यसाध्यवद्भिन्नत्वाभावस्याधिकरणाप्रसिद्ध्यालक्षणमिदंऽसंभवितिनद्धिकरणस्यैवतन्निष्ठधर्मावच्छेदक
तयागगनजलत्वादौवह्निमत्पर्वतसंयुक्तत्वाभावस्यधूमवत्पर्वतानवच्छेद्यत्वादतआह नादृश्याभावश्चेति। हेत्वधिकरणावच्छेद्यसाध्यवद्भि
न्नत्वाभावश्चेत्यर्थः। संबंधान्तरेणहेतुतावच्छेदकसंबन्धान्यसंबंधेन तथाचहेतुमत्पर्वतनावच्छेद्यत्वविशिष्टस्यवह्निमत् संयुक्तत्वाद्यभावस्याधि
करण त्वंपर्वतीयरूपादावेवप्रसिद्धमितिभावः। यद्यपिरूपादौवह्निमत्संयुक्तत्वाद्यभावस्यव्याप्यवृत्तित्वात् नतत्पर्वतादिकंतदवच्छेदकंभावाभा
वयोरेकत्रवृत्त्यर्थमेवावच्छेदकस्वीकारादित्यप्रसिद्धिनादवस्थ्यंनचमहानसादिसंयुक्तेकालिकादिसम्बन्धेनपर्वतादिनिष्ठयदादौवह्निमत्संयु

नादृश्याभावश्चसम्बन्धान्तरेणतत्रैववर्तमानेसुलभः।

क्तत्वाभावस्यपर्वतनाद्यवच्छेद्यत्वप्रसिद्ध्यानदोषइतिवाच्यम्। इत्थमपिएतद्रूपवानेतद्रूपादित्यादावेतद्रूपाधिकरणावच्छेदेनएतद्रूपवत्स्वेतत्वा
भावस्याप्रसिद्धेर्दुर्वारत्वात् तथापिपर्वतनावच्छेदेननदीयरूपेणवह्निमत्संयुक्तत्वमित्यादिभिन्नीत्याव्याप्यवृत्तेरवच्छेदकत्वस्वीकारादित्यमभिधानंहे
तुतावच्छेदकसंबंधेनसाध्यवद्भिन्नत्वाभावविशिष्टस्ययस्याधिकरणंतदन्यत्वेवाग्रंथनासयं तथाचव्याप्यवृत्तेरवच्छेदकत्वस्वीकारादित्यमभिधानं
हेतुतावच्छेदकसंबंधेनसाध्यवद्भिन्नत्वाभावविशिष्टस्ययस्याधिकरणंतदन्यत्वेवाग्रंथनासयंतथाचव्याप्यवृत्तेरवच्छेदकत्वासत्त्वेपिसाध्यवद्भि राम
न्नत्वाभावविशिष्टस्ययस्याधिकरणंतद्भिन्नत्वमादायैवलक्षणसंगतिः नचवस्तुगत्यासाध्यवद्भिन्नत्वाभावविशिष्टस्ययस्याधिकरणंहेत्वधिकरणंत ८

द्रव्यत्वोक्तौ वह्निमान्धूमादित्यादावव्याप्तिः स्वावयवावच्छेदेन वह्निमत्संयुक्तस्याभाववत्तो धूमस्याधिकरणतायाः साधनवत्सर्वत्रादोसत्त्वात् साध्य-
वद्भिन्नत्वाभावविशिष्टयद्व्यक्तित्वावच्छिन्नाधिकरणत्वं हेतुमतस्तदन्यत्वोक्तौ तु वह्निमान् धूमादिदं वाच्यं ज्ञेयत्वादित्यादौ सर्वत्रैवासंभवः साध्य
वत्संयुक्तत्वादिविशिष्टतत्तद्रूपादिव्यक्तित्वस्य गुरुतया प्रमेयरूपत्वावच्छिन्नायाः प्रतियोगिताया इव तदवच्छिन्नाधिकरणत्वाप्रसिद्धेः केवलस्याति
प्रसंग एव विशिष्टधर्मस्याधिकरणतानिरूपकतावच्छेदकत्वकल्पनादिति वाच्यं सार्वभौमानां मते प्रतियोगिताया इवाधिकरणताया अपि गुरुधर्मा
वच्छेद्यत्वोपगमात् अन्यथा समवेतत्वादिकमपेक्ष्य सत्तावत्समवेतत्वत्वस्य गुरुतया साध्यवद्भिन्नत्वावच्छिन्नप्रतियोगिताकाभावाप्रसिद्ध्या सत्ता
वान्द्रव्यत्वादित्यादावव्याप्तिप्रसंगात् ननु साध्यसामानाधिकरण्यवतो न तद्भाववत्त्वमतो द्रव्यं सत्त्वादित्यादौ व्यभिचारिण्यतिप्रसंग इत्यत आह । व्य

व्यभिचारिणस्तु व्यभिचारनिरूपकाधिकरण एव तादृशि तादृशाभाववत्त्वं । सत्तायां गुणे तद्द्रव्यत्वसामानाधिकरण्यमित्यनु
भवात् । न चैवं गुणकर्मान्यत्वविशिष्टसत्त्वेऽव्याप्तिः । विशिष्टस्यानतिरिक्तत्वात् ॥ भिचारिणस्त्विति । तादृशीति हेतुतावच्छेदकसम्बन्धेन हे

तुमतीत्यर्थः । तादृशाभाववत्त्वं साध्यवद्भिन्नत्वाभाववत्त्वं अत्रैवानुभवं प्रमाणयति सत्तायामित्यादि एवं सत्तायामपि द्रव्यत्वसामानाधिकरण्यविर
हे विशिष्टसत्त्व इति । विशिष्टसत्त्वशब्दप्रतिपाद्यहेतावित्यर्थः यथाश्रुते गुणकर्मान्यत्वविशिष्टसत्त्वाव्यक्तावव्याप्त्याशंकायामुत्तरग्रंथेन तदनिरा
सादसंगत्यापत्तेः । अनतिरिक्तत्वादिति । विशेष्यविशेषणाभ्यां भिन्नत्वादित्यर्थः । तथा च गुणादिकं न हेत्वधिकरणमतो नाव्याप्तिः उभयत्वमपि ।
एकविशिष्टापरत्वमेव तच्चानतिरिक्तमेव नातः स्पर्शवान् मूर्तत्वमूर्तत्वोभयस्मादित्यादावव्याप्तिरिति भावः यद्यपि हेतुतावच्छेदकविशिष्टहेत्वधिक

सि॰जा ६ रणावच्छेदेनेतुक्तावपि विशिष्टसत्तादिहेतौ नाव्याप्तिः नच धूमाधिकरणमहानसाद्यवच्छेदेन पर्वतीयादिधूमे वन्हिमत्संयुक्तत्वाभावस्य चालनीन्यायेन
सत्वादव्याप्तिः महानसादेरपि कालिकादिसंबन्धेन पर्वतीयधूमाधिकरणत्वात् नच साध्यवह्निमत्त्वाभाववत्तायामवच्छेदकत्वादि निवाच्यस्तावच्छि-
न्नाधिकरणावच्छेदेन साध्यवह्निमत्त्वाभाववद्वृत्तिधर्मवत्वमित्यस्यैव फलितार्थस्य तद्धूमत्वधर्ममादायैव लक्षणसंभवेन धूमत्वस्य हेतुतावच्छेद
कत्वेपि क्षत्यभावात् तथापि विशिष्टस्यातिरिक्तत्वात्तत एवाव्याप्तिवारणसंभवे हेतुतावच्छेदकावच्छिन्नाधिकरणत्वप्रवेशे गौरवमसंभवो वा विशि
ष्टनिरूपकाधिकरणत्वाप्रसिद्धेः एवं धूमत्वादेर्व्याप्यतानवच्छेदकत्वेनादूषेण कथायां हेतोरुपन्यासो न स्यादित्याशयः ननु विशिष्टसत्वस्यातिरिक्त-
त्वे मानाभावः नच गुणे विशिष्टसत्तावानिति प्रतीत्यभावस्य प्रमाणं । गुणस्य विशिष्टनिरूपिताधिकरणत्वविरहादेव तादृशप्रतीत्यसंभवात् नच विशि-

## अनतिरिक्तत्वेतु

ष्टनिरूपितमधिकरणत्वं यद्यतिरिक्तं तदा विशिष्टमेवातिरिक्तमस्तु विशिष्टाधिकरणतायाः क्लृप्ताधिकरणतास्वरूपत्वाभ्युपगमात् किंच विशिष्टस्या
तिरिक्तत्वे द्रव्यं विशिष्टसत्तावदिति निर्णयदशायामपि द्रव्यं न सत्तावदिति प्रत्ययप्रसंगः सत्ताभाववद्बुद्धिं प्रति सत्तानिश्चयस्यैव विरोधितया तदसत्वात् ॥
स्यानंत्येन विरोधितानंतरकल्पने गौरवात् एवं विशेषणविशेष्योभयग्राहकसामग्रीविरहेपि विशिष्टग्रहप्रसंगः तदुभयग्राहकसामान्या विशिष्ट-
स्यग्रहे हेतुत्वकल्पनेपि गौरवं तारस्फुटमेवेत्यत आह । अनतिरिक्तत्वेत्विति । गुरुत्वमस्तु विशिष्टस्यातिरिक्तत्वादिति ग्रंथस्य विशिष्टनिरूपिताधिकरणत्व- राम
स्यातिरिक्तत्वादित्यर्थः । तथाच हेतुतावच्छेदकविशिष्टहेत्वधिकरणावच्छेदेन तादृशवह्निमत्त्वाभाववत्त्वमपि निवेश्यमतो नाव्याप्तिरित्याशयः ननु विशि ६

ष्टाधिकरणत्वंयद्दिनातिरिक्तंविशिष्टंसत्तावानितिप्रतीतेः प्रत्येकनिरूपिताधिकरणताद्वयावगाहित्वेनैवोपपत्तेः अन्यथाविशेषणाभावनिर्णयदशा
यामपिविशिष्टसत्तावत्त्वप्रतीत्यापत्तेः विशिष्टसत्ताबुद्धौविशेषणाभाववत्ताज्ञानस्यप्रतिबंधकतायाः स्वातंत्र्येणकल्पनागौरवादित्युच्यतेतेनदाप्याह।अ
नतिरिक्तत्वेनेतिभावः विशेषणेति। विशेषणेति। विशेषणतानुगुणकर्मान्यत्वंविशेष्यंसत्तानयोः सामानाधिकरण्यात्मकसंबंधस्यैवेत्यर्थः साक्षात्संबं
धेनतस्यव्यभिचारित्वादाह। परंपरयेति। अवच्छेदकताख्यस्वरूपसंबंधेनेत्यर्थः। सत्त्वगुणकर्मान्यत्वयोर्द्रव्यएवसामानाधिकरण्यमितिप्रतीत्याव
च्छेदकतासंबंधेनतदुभयसामानाधिकरण्यस्यद्रव्यएवसत्त्वान्नव्यभिचारइतिभावः। नन्वेवंज्ञेयत्वाधिकरणघटाद्यवच्छेदेनवाच्यत्ववद्भिन्नत्वाभावस्य
प्रदीपरूपाद्यावेवसत्त्वात्तदधिकरणाभिन्नत्वमस्त्येवज्ञेयत्वादिहेतोरित्यग्रेकेवलान्वयिन्यव्याप्तिप्रदर्शनमसंगतमतआह। केवलान्वयिनीति। द्वितीयेति।

विशेषणविशेष्यसंबंधस्यैवपरंपरयाव्याप्तत्वात्। केवलान्वयिनिचाव्याप्तेरभिधानंद्वितीयलक्षणाभिप्रायेणेत्याहुस्तच्चिं
त्यं। तत्रसाध्यवद्भिन्नस्याप्रसिद्धत्वादितिभावः। यद्यपीदंवाच्यंप्रमेयादित्यादौतादात्म्येनकेवलान्वयिनिहेतौप्रथमलक्षणेव्याप्तिःसंभवतिप्र
मेयावच्छेदेनवाच्यत्ववत्तादात्म्यकत्वविरहेणाऽप्रसिद्धेः। नचघटाद्यवच्छेदेनवाच्यत्ववत्तादात्म्यविरहोघटत्वादौसुलभः। तथासति। घटत्वंघटेनवा
च्यमितिप्रतीत्यापत्तेः तथापिस्वाधिकरणनिरूपितहेतुतावच्छेदकसंबंधेनसाध्यवद्भिन्नत्वाभावोत्रलक्षणघटकइत्यभिप्रायेणद्वितीयलक्षणाभिधानं
स्वपदस्यतत्तत्साधनव्यक्तिपरतयातादात्म्येनप्रदात्मकहेत्वधिकरणीभूतघटव्यक्तिनिरूपिततादात्म्येनवाच्यत्ववत्तादात्म्यकत्वाभावस्यघटावच्छेदेन
घटत्वादावेवप्रसिद्धेः वस्तुतस्तुकेवलान्वयित्वं वृत्तिमदत्यंताभावाप्रतियोगित्वमात्रंनत्ववच्छेदकगर्भं। तथाचतादात्म्येनकिंचिदपिप्रमेयंनकेवला

सिं. जा. ९०

न्वयीति द्वितीयलक्षणे एवं तादृशकेवलान्वयिन्यव्याप्तिसंभवात् यथाश्रुतमेव सम्यगिति ध्येयं । नव्यास्तु केकेवलान्वयिनि चाव्याप्तेरिति केवलान्वयि
सामान्ये व्याप्तेरभिधानं द्वितीयलक्षणाभिप्रायेणेत्यर्थः प्रथमलक्षणे यत्किंचित्केवलान्वयिनि तादात्म्येन प्रमेयादिहेतावव्याप्तावपि न क्षतिरित्या
हुः सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिः सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यस्यावच्छेदकत्वाभावं गुणादावगाहत इत्यत्र समानाका
रकप्रतीतिं दृष्टांतयति । द्रव्यत्वे गुणाद्यनिनतूक्तप्रतीतेर्गुणावच्छेदेन द्रव्यत्वे पृथिवीत्वसामानाधिकरण्याभावो विषयः गुणस्य द्रव्यत्वानधिकरणत
यातन्निष्ठपृथिवीहनित्वाभावावच्छेदकत्वासंभवात् किंतु द्रव्यत्वनिष्ठं यत्पृथिवीत्वसामानाधिकरण्यं तदवच्छेदकत्वाभाव एव गुणे विषय इति तद्
धीयमपि इति भावः अवच्छेदकत्वाभावमिति । प्रात्यक्षिकप्रत्ययाभिप्रायेणेदं सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमित्यादिशाब्दस्थलेऽवच्छेद

सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति । प्रतीतिर्हि द्रव्यत्वे गुणे न पृथिवीत्वसामानाधिकरण्यमिति प्रतीतिवत्सत्ता
निष्ठद्रव्यत्वसामानाधिकरण्यावच्छेदकत्वस्य परंपरासंबंधेन सामानाधिकरण्यस्य वा । अभावं गुणेऽवगाहते । कत्वोपस्थापकप

दांतरविरहात् तदभावस्य गुणादौ बोधयितुमशक्यत्वात् । किंतु सत्तानिष्ठं द्रव्यत्वसामानाधिकरण्यं न गुणावच्छेद्यमित्याकारक एव तत्र बोधः गुणादावित्य
त्यसंभव्यार्थस्य नञर्थेऽन्वयादिति ध्येयं नन्वेवं तादृशप्रतीतेः सामानाधिकरण्याभावविषयकत्वमनुभवसिद्धं विरुध्येत सामानाधिकरण्यस्य व्याप्यवृ
त्तित्वेन तदवच्छेदकत्वाप्रसिद्ध्या तादृशावच्छेदकत्वाभावविषयकप्रतीतेर्भ्रमत्वापत्तिश्चेत्यत आह परंपरासम्बन्धेनेति । निरूपकताख्यस्वरूपसं
बंधेनेत्यर्थः । न त्ववच्छेदकताख्यस्वरूपसंबंधेनेत्यर्थः तथा सति सत्तायां द्रव्ये न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिप्रसंगात् । सामानाधिकरण्यस्य

राम ९०

व्याप्यत्वतया कुत्राप्यवच्छेदकत्वसंवंधेन तस्यासत्त्वात्। नन्विति। तथा च द्रव्यं सत्त्वादित्यादावतिव्याप्तिरिति भावः। ननूक्तदृष्टान्तस्थले वाधक
सत्त्वादवच्छेदकत्वाभावोऽनुप्रतीतेर्विषयः प्रकृते तु साध्यसामानाधिकरण्याभावविषयकत्वेन किंचिद्वाधकमस्तीत्यतो वाधकमाह। सत्तानेति।
तथा च सत्तायां द्रव्यवृत्तित्वाभावसत्त्वे द्रव्यवृत्तित्वाभाववद्भिन्नत्वधीस्तत्र तस्या इति भावः ननु द्रव्यवृत्तित्वाभावोऽव्याप्यवृत्तिरेवेति न दृढ्देशोऽप्यव्या-
प्यवृत्तिर्वाच्यः तथा च द्रव्यगुणात्मकविभिन्नावच्छेदेन तयोः सत्तायां समवेतत्वात्तु नो विरोध इत्यत आह। द्रव्यवृत्तित्वाभाव इति। नन्वेवं मूलेन कपि
संयोगीति प्रतीत्या वृक्षादौ कपिसंयोगाभावोऽपि न सिद्ध्येत् तत्रापि वृक्षनिष्ठसंयोगावच्छेदकत्वाभावस्य मूलेऽवगाहनसंभवादत आह। वाधकभाव

ननु सत्तायामेव द्रव्यवृत्तित्वाभावं सत्ता न द्रव्यवृत्तित्वाभाववती द्रव्यवृत्तित्वाभावो न। सत्तावृत्तिरित्यादिसर्वजनप्रसिद्धप्र
तीतिवाधितत्वात्। वाधकाभावात्तु संयोगतदभावयोरवच्छेदकभेदेनैकत्र प्रतीत्या तदुभयोरेकत्र सिद्धिः। अतीन्द्रियसाध्य
केऽतीन्द्रिये व्यभिचारिण्यतिप्रसंगाच्च। तत्र सामानाधिकरण्याभावस्य प्रत्यक्षत्वासंभवेनासिद्धेः। न च तदभाववद्वृत्ति
त्वेन तत्र तदनुमेयं। तद्वद्वृत्तिभिन्नत्वस्योपाधित्वात्। इति। कपिसंयोगाभावो न वृक्षवृत्तिरित्यादिप्रत्ययस्यासंभवादिति भावः।

ननु द्रव्यवृत्तित्वाभावो न सत्तावृत्तिरिति प्रतीतिरेवासिद्धा द्रव्यवृत्तित्वाभावो गुणावच्छेदेन सत्तावृत्तिरिति प्रत्ययात् एकशेषस्य कर्तुमशक्यत्वाद
तो दोषान्तरमाह। अतीन्द्रियेति। मनस्त्ववदणुत्वादित्यादावित्यर्थः। तत्र अतीन्द्रियसाध्यके असद्धेतौ ननु प्रत्यक्षासंभवेनाप्यणुत्वं मनस्त्वसामाना
धिकरण्याभाववन्मनस्त्वाभाववद्वृत्तित्वात् पृथिवीत्ववदित्यनुमानेनैव तत्र सामानाधिकरण्याभावः सत्स्यतीत्यत आह। न चेति। तद्वद्वृत्तीति सा

ध्यवह्निभिन्नत्वस्येत्यर्थः। तथाचोक्तानुमानेमनस्त्ववत् वह्निभिन्नत्वमुपाधिः तस्यचसाध्यव्यापकत्वंघटत्वादौसाधनाव्यापकत्वंह्रदत्वादौप्र ह्रंभेदस्याव्याप्यवह्नित्वेनसाध्यवह्नित्वाद्यवच्छिन्नभेदकूटउपाधिर्बोध्यः नन्वक्तोपाध्यप्रतिसंधानदशायामुक्तानुमानादेवसाध्यवह्नित्वाभावसिद्धिस्तत्रभविष्यति अन्यथाव्याप्यंतरस्यापितत्रातिप्रसङ्गादित्यतआह। किंचेदमित्यादि। तथाचकालोगोमान्गोत्वादित्यादौका-लिकसंबंधेनहेतावव्याप्तिः। कालिकसम्बन्धेनहेतुमतिमहाकालेतेनसंबंधेनकालवृत्तित्वाभावस्यकुत्राप्यसत्वात् नचकालावच्छेदेनगगनादावेवसाध्यवह्नित्वाभावस्यप्रसिद्धिः कालस्यगगनाद्यनधिकरणत्वेनतन्निष्ठवृत्तित्वाभावेकालावच्छेद्यत्वासंभवात् कालिकसंबन्धेनगगनादेर्वृत्तिमत्त्वस्वीकाराच्च यद्यपिगोत्वाद्यधिकरणतत्क्षणावच्छेदेनकालवृत्तित्वाभावस्यतत्क्षणासमानकालीनेतत्क्षणगोचरज्ञानेप्रसिद्धिः तत्र

किंचइदमिदानीमितिप्रतीतिनियामकविशेषणताविशेषेणहेतुतायांसद्धेतावव्याप्तिः। तेनसंबन्धेनाधिकरणेकालेतेनसंबन्धेनसाध्यवह्नित्वस्यविरहिणोऽप्रसिद्धेः॥ तत्क्षणस्यापिविषयतयास्वविषयकज्ञानाधिकरणतयातन्निष्ठतादृशवृत्तित्वाभाववत्तायामवच्छेदकत्वसंभवात्। तथापिमहाकालएवकालिकसम्बन्धेनाधिकरणंउपाधीनांतुतत्तद्वृत्तितायामवच्छेदकत्वमात्रमितिप्राचीनसिद्धांतमनुरु-ध्येत् महाकालनिरूपितविशेषणतयावाहेतावव्याप्तिर्द्रष्टव्या इदमिदानीमित्याकारकप्रतीतिनियामकविशेषणतायाविशेषस्तेनहेतुतायामितिव्याख्ययातादृशविशेषणतायाःप्राप्तेःसामान्यतएवविभिन्नकालीनयोर्नाधाराधेयभावइतिमतेनानुपपत्तिगंधोपिस्वसमानकालीनस्यविषयत-याप्यनधिकरणत्वेनतदवच्छेदेनज्ञानेसाध्यवह्नित्वाभावप्रसिद्ध्यसंभवादितिध्येयं। अत्रहेतुमदवच्छेदकसंबन्धेनस्वाधिकरणेस्वनिरूपितहेतुताव-

च्छेदकसंबंधेनसाध्यवद्भिन्नत्वाभावस्यविवक्षायांनकोपिदोषः साधनगोत्वाधिकरणमहाकालावच्छेदेनगोत्वनिरूपितकालिकसंबन्धेनसाध्यवद्
भिन्नत्वाभावस्यघटादावेवप्रसिद्धत्वात् साध्यसामानाधिकरण्यत्वयद्धर्मावच्छिन्नाधिकरणावच्छेदेनहेतुमन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकंतद्धर्म
वत्त्वंवाविवक्षितम्। इत्थंचवाच्यंप्रमेयादित्यादौप्रमेयव्यक्तीनांभेदेपिनाव्याप्तेर्भेदइत्यस्यमद्गुरुचरणाः केचित्तुस्वनिष्ठंयत्साध्यवद्भिन्नत्वंतदधिक
रणावच्छेदेनतदभावाधिकरणभिन्नत्वमित्यर्थः। तादृशाभावाधिकरणत्वंसद्धेतुस्थलेस्वभिन्नव्यक्तावेवप्रसिद्धमतोनाव्याप्तिरित्याहुः साध्यवद्
भिन्नत्वाभावाधिकरणत्वसामान्येयन्निष्ठत्वयदधिकरणावच्छेद्यत्वोभयाभावस्तत्त्वंव्याप्तिः पर्वतीरूपनिष्ठंयत्पर्वतावच्छेद्यंवह्निमत्संयुक्तत्वाभा-
वाधिकरणत्वंनतद्धूमनिष्ठं यत्तुधूमनिष्ठंनतद्धूमाधिकरणावच्छेद्यमधिकरणभेदेनतस्यनानात्वात् अन्यथापर्वतेनदीयरूपेणवह्निमत्संयुक्तत्वमि
तिवत्पर्वतेधूमेनवह्निमत्संयुक्तत्वमित्यादिप्रतीत्यापत्तेः अतोवह्निमान्धूमादित्यादौनाव्याप्तिः व्याप्यवृत्तेरवच्छेदकत्वास्वीकारेतुतादृशाभावाधिक
रणत्वसामान्येयदधिकरणावच्छेद्यत्वसामान्याभावस्तत्त्वमित्येववाच्यमित्यादिकंपुनरुद्दस्सरत्वादुपेक्षितंवाच्यत्वादिसाध्यकेतादात्म्येनहेतावव्या-
प्तेश्चवाच्यत्ववत्तादात्म्याभावाप्रसिद्धेः एतेनसत्तायांकर्मणिनद्रव्यत्वसामानाधिकरण्यमितिप्रतीतौकर्मणाद्रव्यकसत्तयोः समवायस्याप्यवच्छेदक
त्वंभासते अन्यथाइदानींसत्तायांनद्रव्यत्वसामानाधिकरण्यमित्यादिप्रतिपत्तेः एतत्कालस्यकर्मानतिरेकात् एवंचयद्धेतुव्यक्त्यधिकरणीयहेतुता-
वच्छेदकसंबन्धेसाध्यवद्भिन्नत्वाभावावच्छेदकत्वंनास्तितत्त्वमित्यर्थः कालोगोमान्गोत्वादित्यादौकालवद्भिन्नत्वाभावावच्छेदकत्वस्यद्रव्यत्वादि
निष्ठआत्मसमवेतत्वादौप्रसिद्धस्यगोत्वाधिकरणीयकालिकसम्बन्धेविरहान्नाव्याप्तिरित्यपिनिरस्तमितिसंक्षेपः॥ इतिसिंहव्याघ्रलक्षणद्वयप्रक
रणं॥ श्रीसम्वत् १९४० श्रावणशुक्ल ६ रविवार ॥ ७ ॥ ७ ॥



इति सिंहव्याघ्रसहिताजागद्दीश्रीपञ्चलक्षणीसम्पूर्णा

